# SARASVATĪBHAVANA-STUDIES

[ Vol. 40 ]

# PĀRĀŚAROPAPURĀṆAM

( SAMĪKṢĀTMAKAM SAMPĀDANAM )

EDITED BY

DR. KAPILADEVA TRIPĀṬHI

Ex-Reader

Department of 'Purāṇetihāsa'

Sampurnanand Sanskrit University

Varanasi

VARANASI

1990

सरस्वतीभवन-अध्ययनमाला

[ ४० ]

# पाराशरोपपुराणम्

( समीक्षात्मकं सम्पादनम् )

सम्पादकः

**डॉ० कपिलदेवत्रिपाठी**

उपाचार्यचरः

पुराणेतिहास-संस्कृतिविभागस्य

सम्पूर्णानन्दसंस्कृतविश्वविद्यालये

वाराणसी

वाराणस्याम्

२०४६ तमे वैक्रमाब्दे        १९११ तमे शकाब्दे        १९९० तमे खैस्ताब्दे

# अध्यायानुसारि विवरणम्

## प्रथमोऽध्यायः (उपक्रमः)

सौरमण्डलमध्यस्थं संसारभेषजं साम्बं शिवं नमस्कृत्य मुनिवरः शुकदेवो मेरुशृङ्गे समासीनं सर्वज्ञं श्रीपराशरं प्रति सादरं सविनयं पप्रच्छ-भगवन् भवपाशनिबद्धानां जीवानां भवबन्धविमुक्तये कोऽभ्युपाय इति निबोधय। ततः भगवान् पराशरः भवानीपतिं शङ्करं ध्यात्वा भक्तिप्रह्वं शुकं प्रत्युवाच। पुरा कृष्णद्वैपायनो व्यासो यदा निखिलानि (अष्टादश) पुराणानि निर्माय मुनीनदर्शयत् तदा तद्वचनानैपुण्यावलोकनाकृष्टपरमप्रसन्ना मुनयो व्यासमपूपुजन्। तदानीमेव परमकारुणिको भक्तवत्सलो भगवान् शङ्करो भवान्या सहितस्तत्र प्रादुरभूत्। तं भगवन्तं भूतनाथं दृष्ट्वा मुनयः प्रदक्षिणीकृत्य प्रणम्य समर्च्य च सगद्गद्गिरा तुष्टुवुः। भगवान् शङ्करश्च मुनिसपर्यासन्तुष्टमानसस्तानुवाच—अयं सत्यवतीसूनुर्व्यासो मत्प्रसादेन लोककल्याणार्थं सकलं पुराणं निर्ममे। तेन मम मनसि महानानन्दो जातः। अतः परं भवन्तो व्यासमुखात् समस्तं पुराणं (महापुराणम्) समाकर्ण्य अन्यानि उपपुराणानि रचयन्तु इति आज्ञाप्यैवं सोऽन्तर्दधौ।

तदनन्तरं तदाज्ञां शिरसि निधाय मुनयो वक्ष्यमाणानि उपपुराणानि निरमाशिषुः—

| | | |
|---|---|---|
| (१) सनत्कुमारोक्तम् | (२) नारसिंहम् | (३) नान्दम् |
| (४) शिवधर्मम् | (५) दौर्वासम् | (६) नारदीयकम् |
| (७) कापिलम् | (८) मानवम् (पावकम्) | (९) उशनसेरितम् |
| (१०) ब्रह्माण्डम् | (११) वारुणम् | (१२) कालीपुराणम् |
| (१३) वाशिष्ठम् (लैङ्गम्) | (१४) साम्बम् | (१५) सौरम् |
| (१६) पाराशरम् | (१७) मारीचम् | (१८) भार्गवम्। |

तत्र पाराशरोपपुराणं मयैव कथितम्। पुराणमिदं शिवप्रीतिकारकमिति।

## द्वितीयोऽध्यायः सृष्टिक्रमः)

प्रलयकाले खल्विदं चराचरं जगत् स्वकीयकारणीभूतमायाऽभिन्नरूपेण वासनारूपेण मायाभिन्ने परमेश्वरे संतिष्ठते न त्वभावरूपेण वर्तते। ततः प्रलया-

वसाने सर्गाद्यकाले कालकर्मविपाकात् वासनाबलाच्च मायाया स्रक्फणीव महान् आत्मा जायते । महानात्मा च स्रष्टव्यविषयकसत्त्वजज्ञानमेव । तत्स्वरूपं महान्तमात्मानं सृष्ट्वा शिवः स्वयं तत्रानुप्राविशत् । एवंभूतो महानात्मा ज्ञानप्राधान्यात् सर्वज्ञ इति तथा ईक्षणोपाधित्वाच्च प्रधान इति गीयते । स ईक्षिता महानात्मा सत्त्वं रजस्तमश्चेतिगुणानात्मतयाऽङ्गीकृत्य(अभिमत्य)रजोगुणेन जगदुत्पाद्य सत्त्वेन परिपाल्य तमसा च संहृत्य स्रष्टा गोप्ता संहर्त्ता चेतिसंज्ञां क्रियानुरूपां भजन् स्रष्टृत्वेन ब्रह्मा गोप्तृत्वेन विष्णुः संहर्तृत्वेन शिव इत्यभिधाभिः व्यवह्रियते । तत्र महेश्वरः सृज्यमानसकलप्रपञ्चकारणस्याधिष्ठानतया जडा माया च परिणामितयोपकरोति तथा भूतानां सर्गे स्थितौ लये च पुण्यं पापं काले वासनापि सदोपकुर्वन्ति । ब्रह्मविष्णुमहेशानां सर्गानन्तरं मायातः शब्दपूर्विका भूतसृष्टिः प्रवर्तते । शब्दादिपञ्चभूतानां सत्त्वगुणैर्ज्ञानशक्तयो(ज्ञानेन्द्रियाणि)रजोगुणैश्च कृतिशक्तयः(कर्मेन्द्रियाणि) जायन्ते उत्पन्नाश्च ता ज्ञानशक्तयः स्वकारणैकमायाख्याविद्यया कवलीकृताः सत्यः एकाकारत्वमापद्य कालकर्मविपाकात् अन्तःकरणानां (मनोबुद्धिचित्ताहङ्काराणां) व्यष्टिसमष्टिरूपाभ्यां प्रवर्तन्ते; एवं समुत्पन्नाः कृतिशक्तयः स्वकारणैकमायारूपयाऽविद्यया कवलीकृताः सत्यः एकाकारत्वमापद्य कालकर्मविपाकात् सर्वस्य प्राणस्य (पञ्चविधस्य) व्यष्टिसमष्टिरूपाभ्यां विजायन्ते । तत्र शब्दादितन्मात्रास्थाः सत्त्वगुणोत्पन्ना ज्ञानशक्तयो ज्ञानेन्द्रियाणां समष्टयस्तथा कृतिशक्तयः कर्मेन्द्रियाणां समष्टयो भवन्ति । समष्टयन्तःकरणं मनोबुद्धिचित्ताहङ्कारभेदाच्चतुर्विधं समष्टिप्राणः प्राणापानव्यानोदानसमानभेदात्पञ्चविधो भवति । तत्र तेषां बाह्यान्तःकरणादीनामभिमानिनो देवा हिरण्यगर्भादयः सर्वस्य च भगवान् सत्यादिलक्षणोपेतः साम्बोऽधिष्ठातृदेवः । तस्मात् साम्बशिवात् ब्रह्माण्डभेदो लोकभेदो भोक्तृभोग्यभेदो देवभेदो वर्णाश्रमादिभेदो धर्माधर्मसुखदुःखमर्त्यस्वर्गादिभेदो माययोत्पद्यते । स एव सत्यादिलक्षणः साम्बः सर्वकारणं नापरः । तस्माच्छ्रौतस्मार्तविधिभिः स एवोपास्योऽपरस्तु तच्छेषत्वेन । स एव सर्ववेदान्तप्रतिपाद्यः वेदानुसारिस्मृतिपुराणेतिहासादिप्रतिपाद्यश्च । श्रौतस्मार्त सदाचारैः स एवाराध्यः तच्छेषत्वेन तदन्यदेवा आराध्याः । क्वचित्वदाचिद् ज्ञेयत्वं ध्येयत्वं चैषां तद्रूपत एव न, अपि तु साम्बस्यान्वयेन । स्मृतयः पुराणानि भारतेत्यादीतिहासाः शिवशङ्कररुद्रेशब्रह्मेशानादिनामभिः परमं पदं ब्रुवन्ति, न तु विष्णुनारायणादिनामभिः । रुद्रादिशब्दा रुढ्या परमेश्वरे वर्तन्ते विष्ण्वादिशब्दा योगवृत्त्या । सत्यादिलक्षणः साक्षात् साम्बः सर्वमूर्तिः, तदधीनमेव जगत् । वेदास्तमेव परमतत्त्वं वदन्ति । स शिवः परमतत्त्वतया पापिनां कृते न भासते किन्तु सिद्धानां श्रौतस्मार्तानुवर्तिनां कृते विभासते । सर्वैरपि प्राणिभिरमात्ये राजदृष्टिरिव सर्वत्र शिवदृष्टिः कर्तव्या । स एव राजाधिराजः तस्यैवानुचरा ब्रह्मादयः । तत्प्रसादादेव

मुक्तिहेतुपरिज्ञानं, न तु विष्ण्वादिप्रसादात् । मुक्त्यर्थं ये साम्बं शिवं विहायान्यदेवान् यजन्ते, न ते विमुक्ता भवन्ति । अपि तु संसरन्ति । सर्वं परित्यज्य शिव एव ध्येय इति वदत्याथर्वणी श्रुतिः । ईदृशी निष्ठा शास्त्राणामपि । साम्बादतिरिक्तं सर्वं विश्वं ततोऽधिकः शिव एव जगन्नाथः संसारमोचकश्च ।

## तृतीयोऽध्यायः (जीवानां तारतम्यविवेचनम्)

शम्भुना सृष्टेषु जडाजडेषु सर्वेषु विश्वेषु विशेषादरणीयत्वात् देवानामधिकं महत्त्वं, ततोऽतिरिक्तेषु अचेतनापेक्षया चैतन्यं महत्तरं, तत्रापि मानवाः श्रेष्ठास्तेभ्यश्च द्विजा मतास्तेषु च कुलीनाः (श्रोत्रिया) तेभ्यो मनुष्यगन्धर्वास्ततो देवगान्धर्वाः, तेभ्यः पितरः पितृभ्यश्च कर्मदेवास्ततो देवाः, देवेभ्य इन्द्रस्तस्माद् वृहस्पतिर्वृहस्पतेः प्रजापतिस्ततो ब्रह्मा, ब्रह्मणा विष्णुर्विष्णोमयी शिवस्ततः साम्बः शिवोऽधिको मतः । तदन्यत्सर्वं विश्वं विश्वाधिकः शिवः, तत्पराण्येव वेदान्तवाक्यानि सन्ति । स्मृत्यादीनि शास्त्राणि श्रुत्यनुग्राहकास्तर्काः साम्बं विहाय नान्यं विश्वाधिकतया प्रवदन्ति । सर्वाणि माहेश्वरपुराणानि असाधारणया मूर्त्या साधारणेन नाम्ना च परमतत्त्वं साम्बं शिवं प्रवदन्ति तथा तदंशं वैभवं तदंशमानञ्च कथयन्ति । वैष्णवपुराणानि त्रिमूर्त्तिषु हरेर्नाम्ना मूर्त्या च तस्यैव परमतत्त्वं वदन्ति तथा तदंशे तद् वैभवं तदंशमानं च निगदन्ति । ब्राह्मे द्वे आग्नेयसौरपुराणे त्रिमूर्त्तिषु ब्रह्मण एव परमतत्त्वं तथा तदंशतद्वैभवमानं वदन्ति । शैवपुराणेषु हरेर्योऽपकर्षो दृश्यते स साक्षान्मूलभूतस्य हरेरस्ति तथा वैष्णवपुराणेषु शिवस्य योऽपकर्षो दृश्यते स केवलं शिवविभूतेरस्ति । एवं शैवेषु रुद्रस्य य उत्कर्षः स स्वरूपेण तत्त्वात्मना चास्ति, किन्तु वैष्णवेषु विष्णोर्य उत्कर्षः स तत्त्वात्मनैव, न स्वरूपेण । एवं ब्राह्मयोरपि पुराणयोर्ब्रह्मणो ज्ञेयः ।

पुरा अहमहमिकयोरुत्कृष्टं मन्यमानौ ब्रह्मविष्णू मिथो युध्यमानौ क्रोधेन परस्परं शप्तवन्तौ । तत्र ब्रह्मा विष्णुमेवं शशाप –त्वं गर्भस्थो भव, तव भक्ता वेदोक्तमार्गविमुखाः शङ्खचक्राद्यङ्किताः पाञ्चरात्रादिदीक्षिता भवेयुः । विष्णुश्चापि तमेवं शशाप–त्वदीयं पञ्चमं शिरः शङ्करः कर्त्स्यति, त्वद्भक्ता अपि संकरा भवेयुः, त्वदीयं तन्त्रं छिन्नं प्रतिष्ठा च भ्रष्टा स्याताम् । एवं तौ प्रस्खलितावभवताम् । तदित्थं शिवस्यैवाधिक्यं निर्बाधं वर्तते । इत्थं ये न मन्वन्ते ते पातकिनः सन्ति ।

## चतुर्थोऽध्यायः (देवतालिङ्गं भस्मत्रिपुण्ड्रमहिमा च)

देवा द्विधा–श्रौता अश्रौताश्च । तत्र श्रुतिधर्मैकनिष्ठाः श्रौतास्तद्भिन्ना अश्रौताः । श्रौतानां तु श्रौतं लिङ्गम्, तच्च त्रिपुण्ड्रम् । अश्रौतानामश्रौतमूर्ध्व-

पुण्ड्रादि लिङ्गम्। शम्भुविष्णुब्रह्मणां तज्जातानां विशिष्टानामपि च श्रौतमेव लिङ्गम्। तत्र तन्त्रसिद्धो महादेवः शम्भुस्तन्त्रोक्तरीत्या ललाटे भस्मना तिर्यक् त्रिपुण्ड्रं, महाविष्णुस्त्रिशूलमूर्ध्वपुण्ड्रं विरिञ्चिश्चतुरस्त्रकं दधति। इन्द्रादीनां वज्रपाशाङ्कुशादीनि लिङ्गानि सन्ति। तन्त्रनिष्ठैः शिवभक्तैस्तन्त्रोक्तपद्धत्या ललाटे भस्मना त्रिपुण्ड्रं विष्णुभक्तैस्त्रिशूलं चतुरस्त्रं वा विरञ्चिभक्तैर्वर्तुलमिन्द्रादि-भक्तैश्च वज्रपाशाङ्कुशादिकं धार्यम्। अथवा सर्वैस्तान्त्रिकैर्वैदिकैश्च भस्मनैव त्रिपुण्ड्रं कार्यम्। नान्यलिङ्गम् धारणीयम्। महापाप्मनामेव महेश्वरे तल्लिङ्गे द्वेषो भवति। एवं भूतैस्तत्कार्यैस्तदुत्पत्तिविषये साङ्कर्यमेवानुमेयं विपश्चिद्भिः। एवमेव ये वेदमार्गसमं भिन्नं मार्गं, शिवरुद्रादि नामभिः समं विष्ण्वादिशब्दं मन्वते तथा च महादेवादधिकं विष्णुं मन्यन्ते तेषामपि वंशसाङ्कर्यमनुमेयम्। पापबाहुल्याद् दधीचिगौतमयोः शापाच्च श्रौतं लिङ्गम् जनेभ्यः प्रायो न रोचते, प्रत्युत भ्रान्त्या अश्रौतमेव रोचते। अनेकजन्मसिद्धानां श्रौतस्मार्तसदाचारशालिनां वेदोक्तत्रिपुण्ड्रे रतिर्जायते। त्रिपुण्ड्रेनैव ब्राह्मण्यं पुष्कलं भवति। एतत् ज्ञानप्रदं महापातकविनाशकं शिवादीनां देवानां पार्वतीत्यादिदेवीनाञ्च प्रीतिकरं चास्ति। भस्मना त्रिपुण्ड्रं विना भक्तिर्ज्ञानमाचारो विफलाः। एतदेव सतां मार्गः, वर्णधर्मः, आश्रमधर्मः, माङ्गल्यं सर्वसिद्धिकरं ज्ञेयम्। नह्येतद् विना मुक्तिः संभवति। अतो मुक्तिकामैरेतदवश्यमेव धार्यम्।

## पञ्चमोऽध्यायः (श्रुत्यर्थविचारः :—मानवानां श्रेष्ठताक्रमविचारः)

सर्वेषां जन्तूनां निखिलस्य च जगतः कर्त्ता, भर्ता; संहर्त्ता महेश्वर एव नास्ति तत्समस्तदधिको वा कश्चिच्चेतनः। स एव सत्यज्ञानानन्दैकलक्षणः परो महेशो रुद्रविष्णुविरञ्च्यादिरुपेण बहुधा सन्तिष्ठते। शिवस्यास्य प्रसादात् ब्रह्मविष्ण्वादिदेवानां सृष्टिस्थितिप्रलयकर्तृत्वं मुक्तिभुक्तिप्रदत्वञ्चोपजायते अस्य विज्ञानादेव मुक्तिर्न कर्मणा नापि कर्मविज्ञानाभ्याम्। तच्च मोक्षप्रदं ज्ञानं वेदान्त-श्रवणमनननिदिध्यासनैः वेदोक्तमार्गेण भस्मना त्रिपुण्ड्रधारणेन च शुद्धान्तः-करणानां प्राणिनामभिजायते। चित्तशुद्धिश्च यज्ञदानतपः कर्मभिर्भवति। अतः श्रेयोभिलाषुकैः सर्वचेतनैः सर्वथा वर्णाश्रमसदाचाराः श्रौताः स्मार्ता न त्याज्याः।

सर्वेषु मानवेषु जम्बूद्वीपनिवासिनो मानवा वरिष्ठास्तेष्वान्तरालजास्तत्रापि प्रतिलोमजास्ततोऽनुलोमजा वरिष्ठाः सन्ति। संकरप्रभवेभ्यो वरिष्ठा वर्णसंभवाः तत्र शूद्राद्वरिष्ठो वैश्यस्ततो राजन्यस्तत आस्तिको विप्रो वरोऽस्ति। विप्रः खलु सर्व-मानवानां देव इति–अर्थात् भूसुरः। तस्माद्देवाः श्रेष्ठास्तत्र ब्रह्मा (स्रष्टा) ततो विष्णुः (पालकः) ततो रुद्रः (संहारकः) श्रेष्ठो वर्तते। एतेषां सर्वेषां देवानाम-पेक्षया परमेश्वरो वरिष्ठः। तत्र वरिष्ठयोः परस्परं सम्बन्धः समुचितः।

तस्माद् विप्रस्य शिवेनैव सह संबन्धः सुपूजनीयोऽति। वर्णदृष्ट्या विचारे सर्वे देवाः सङ्कराः, पुरन्दरोवृषलः, पितामहो वैश्यः विष्णुः क्षत्रियः, रुद्रो ब्राह्मण इति। अतोऽयं नैसर्गिको रुद्रस्सर्वोत्तमः, नास्य ब्राह्मण्यं हेतुजम्। दृश्यते च लोके, ब्राह्मणो ब्राह्मणमेवोपधावति, नापि वर्णान्तरान्। तस्माद् वेदविद्भिः, ब्राह्मणः शिव एवोपगन्तव्यः। य एवं नाचरति, तत्रावश्यमेव साङ्कर्यम्। आदिभूतेन ब्राह्मणेन शिवेन धृतस्य भस्मत्रिपुण्ड्रस्यानुसरणं ब्राह्मणानां धर्मः। एष एव च तेषां नित्यो धर्मः। तच्छेषत्वेनैव विष्वादिदेवानामुपाश्रयणं न तु प्रधानत्वेन।

## षष्ठोऽध्यायः (वेदगूढार्थविचारः, रुद्राक्षमहिमा च)

वेदानां प्रत्यक्षसिद्धोऽर्थः सर्वैः संग्राह्यः, किन्तु तदप्रत्यक्षसिद्ध्यर्थं मुनीश्वराः क्वचित्कदाचिदधिकारिविशेषाणां कृते प्रकटयन्ति। परा श्रुतिः क्वचित् शिवागमानुसारेण क्वचित् वैष्णवागमानुसारेण क्वचित् ब्राह्मतन्त्रानुसारेण जन्मना वाप्तोच्चजातीनां सर्वेषामाश्रमाणां धर्मं निगदति। स्मृतयः पुराणानि महाभारतादीतिहासाः तेषां क्वचित् कदाचिद् भ्रष्टानां च कृते वेदधर्मानादिशन्ति। तदुक्तधर्मे प्राधान्येन महादेव एव पूज्यो नेतरः। तत्प्राप्त्यर्थमेव विष्णुः पितामहः सर्वे देवा उत्तममध्यमाधमाः पूज्याः सर्वजातिभिः सर्वाश्रमस्थैश्च। वेदोक्तधर्मे त्रिपुण्ड्रं भस्मगुण्ठनं रुद्रलिङ्गार्चनं मुख्यम्। वर्णाश्रमच्युतेन प्रायश्चित्तविमुखेनापि वेदागमोक्तो धर्मः करणीयः। सर्वागमनिष्ठानां कृते त्रिपुण्ड्रं विहाय भ्रमात् पुण्ड्रान्तरग्रहणे तेषां पात एव। त्रिपुण्ड्रधारणं, भस्मावगुण्ठनं, वर्णशिखाकण्ठहस्तेषु रुद्राक्षधारणं श्रेयोऽर्थिभिरादरात् कर्तव्यम्। महादेवो विष्णुर्ब्रह्मा तद्विभूतयोऽन्ये देवाश्च भक्त्या रुद्राक्षं धारयन्ति। पापिष्ठानामेव रुद्राक्षधारणे श्रद्धा न जायते। सर्वेषां कूटस्था गोत्रर्षयः तद्वंशप्रसूताः सर्वे श्रौतधर्मपरा मुनयो रुद्राक्षधारिण एव। महादेव प्रसादाद् बहूनां जन्मनामन्ते रुद्राक्षधारणे श्रद्धा संजायते तथा वेदवेदान्तविज्ञाने वेदोक्ते शास्त्रोक्ते च कर्मणि पुण्येन श्रद्धोत्पद्यते। पापिनां वेदेतरस्वतन्त्रमार्गे स्वभावेनैवेच्छा प्रवर्तते। वेदवादेतरासक्ता बहवो जनाः शिवाज्ञया निरयं प्राप्तास्तथा वेदोक्तमार्गरता अनेके जनाः शिवप्रसादात् भवबन्धनविमुक्ता अभूवन्। मातृवत् श्रुतिर्गोपायति, शत्रुवत् वेदेतरमार्गः साक्षात् बाधकोऽस्ति। तन्त्राणि तन्त्रनिष्ठानामेव रक्षकाणि वेदानुयायिनां तु बाधकान्येव। तस्माद् वेदोक्तो धर्म एव वैदिकैर्ग्राह्यो न तु तन्त्रोक्तः।

## सप्तमोऽध्यायः (ब्राह्मणवैभवम्)

ब्राह्मणस्त्रिविधः—१-जन्मब्राह्मणः, २-वेदब्राह्मणः, ३-ब्रह्मब्राह्मणः। तत्र ब्राह्मण्यां ब्राह्मणेन जातः प्रथमः। सहस्रजन्मार्जितपुण्यवशात् लोके ब्राह्मणगृहे

जन्म लभ्यते। देवानां प्रसादान्मानुष्यमाप्नोति। तत्र इन्द्रप्रसाद् वृषलो, ब्रह्मणः प्रसादाद् वैश्यो विष्णोः प्रसादाद् राजन्यो महादेवस्य प्रसादाच्च ब्राह्मणो लोके जायते। तथा च महादेवप्रसादाद् ब्राह्मणो ज्ञाननिष्ठः, क्षत्रियो रक्षकः वैश्यो वाणिज्यकृषिकः शूद्रश्च शुश्रूषुर्भवति। मनुष्याणां ब्राह्मणः श्रेष्ठः। ब्राह्मणस्यैव तपसा इदं जगत् प्रवर्तते (स्थिरो भवति धार्यते च)। अतः राज्याभिषिक्तै राजभिः सर्वदा ब्राह्मणो रक्षणीयः। ब्राह्मणावगूरणे तु अवगूरयिता स्वर्णशतेन राज्ञा दण्ड्यः। प्रहारे सुवर्णेन दण्ड्यो भवति प्रहर्त्ता। प्रहारे रुधिरे प्राकट्ये सति प्रहर्ता अयुतेन सुवर्णेन दण्ड्यः। अथ शस्त्रादिभिर्ब्राह्मणानां देहक्षते प्रहर्तृ करच्छेदनम् करणीयम्। चक्रादिभिरग्निना वा ब्राह्मणदेहस्याङ्कने शीघ्र-प्रवासनमेव दण्डः। यतो हि पतितानां तस्मादङ्कनं सर्वथा त्याज्यम्। यः खलु वेदब्राह्मणस्तस्यावमानं भ्रान्त्याऽपि न करणीयम्। अधीतवेदयोः क्षत्रियवैश्ययोर-वगूरणं न कार्यं, नापि हिंसा, किमुत वक्तव्यं - वेदब्राह्मणानाम् कृते चावगूरणे-हिंसायाः कर्त्ता च पूर्ववद् दण्ड्यः। यस्तूत्तमो ब्रह्मब्राह्मणस्तस्यावमानं छेदनं च न कार्यम्, कर्त्ता च पूर्ववद् दण्ड्यो भवति। ब्रह्मनिष्ठद्विजानां निन्दका राज्ञा राष्ट्राभिवृद्धये हन्तव्यास्तथा भस्मनावगुण्ठितास्त्रिपुण्ड्रभूषिता ब्राह्मणा रक्षणीया। एतदपराधे दण्डितपुरुषः अध्ययनाध्यापनश्रौतस्मार्तकर्मसंभाषणसंब धेषु नाधि-कारी। ब्राह्मणस्य चिह्नानि तु वैणवो दण्डः, सोदकः कमण्डलुः यज्ञोपवीतं त्रिपुण्ड्रञ्च सन्ति। तानि सर्वाणि ब्राह्मणैः सर्वदा सर्वथा धार्याणि। न च त्रिशूल-मूर्ध्वपुण्ड्रं वर्तुलं चतुरस्रकमर्धचन्द्रादिकं लिङ्गम् कदापि धार्यम्। ब्राह्मणस्य शरीरे सर्वे देवा निवसन्ति, तस्मात् स विशेषतः पूज्यो न कदाप्यवमन्तव्यः। भवेत्कोऽपि देवो महादेवतुल्यः किन्तु ब्राह्मणतुल्यस्यस्तु नास्त्येव। ब्राह्मणचरणस्प-र्शादिवेयं भूमिः शुद्ध्यति तस्य दृष्टिपातादेव सर्वपापाद् विमोचनं भवति, किं बहुना ब्राह्मणमाश्रित्य जगदेतद् विवर्धते।

## अष्टमोऽध्यायः (वेदरहस्यार्थः)

वेदवेदान्तप्रतिपादितयोर्ज्ञानकर्मणोर्ज्ञानस्य प्राधान्यम्। तत्र ज्ञानं द्विधा-एकं साक्षात् परं तत्त्वं द्वितीयं च कारणाज्जन्यम्। तदपि प्रथमज्ञानस्यार्थमुपयुज्यते। कारणोत्पन्नं ज्ञानं द्विधा-एकं तत्त्वावेदकं द्वितीयं च मृषार्थकम्। तत्र तत्त्वावेदकं वेदान्तमात्रजन्यं ब्रह्मज्ञानापरनामधेयं शान्तिप्रव्रज्याभस्मोद्धूलनत्रिपुण्ड्रैकाग्रमति-दान्तिवेदान्तोक्तसाधनचतुष्टयसंपन्नस्य जायते न तु शान्त्यादिरहितस्य। द्वितीयं मृषार्थविषयकं ज्ञानमतत्त्वावेदकनामकमस्ति। व्यवहारदशायां तन्मिथ्याज्ञान-मुच्यते। महादेवमायया यः सत्यत्वेन कल्पितः तदर्थविषयकज्ञानं सम्यग्ज्ञानं तत् संसारभोगायैव शिवेन निर्मितम्। सर्वाणि नित्यकर्माणि मुक्तिज्ञाने परस्पर-

योपयुज्यन्ते। वर्णाश्रमवयोऽवस्थाविशेषाध्यासवान् मानवः सर्वशास्त्रेषु अधिकारी भवति न तु वर्णादिहीनः। ज्ञानार्थश्च नित्यकर्माणि ब्राह्मणैः कार्याणि।

वेदादन्यत्र विज्ञानं नास्ति, तस्मात्कल्याणसदनमेकं वेदः तन्मूलानि मन्वादिशास्त्राणि निखिलानि पुराणानि सादरं नित्यं समाश्रयणीयानि श्रेयस्कामैः। वेदेऽपि क्वचिद् बाह्यार्थतया यत् किञ्चिदुक्तं विरुद्धतया भाति तदपि वैदिकैस्त्याज्यमेव न तु ग्राह्यम्। सांख्ययोगन्यायवैशेषिकशास्त्रेषु वेदैकशरणैर्मानिवैर्वेदविरुद्धोंशः सर्वथा त्याज्यः, किन्तु पाणिनीयं शब्दसाधुत्वोपपादकं शास्त्रं सर्वं ग्राह्यं न त्वंशतः किमपि हेयम्। मीमांसायां वेदान्ते (ब्रह्मसूत्रे) च कोऽप्यंशो वेदविरुद्धो नास्ति, अपि तु वेदार्थविज्ञाने सर्वांशतस्ते शास्त्रे परमोपयोगिनी स्तः। बोद्धजैनचार्वाकशास्त्राणि तु वैदिकैः सर्वदा त्यक्तव्यानि।

## नवमोऽध्यायः (आह्निककृत्यविचारः)

**प्रातः कृत्यम् :—**

मानवः ब्राह्मे मुहूर्ते उत्थाय साम्बं शिवं ध्यात्वा समाहितो भूत्वा धर्ममर्थश्च चिन्तयेत्। ततो विण्मूत्रे त्यक्त्वा वारिणा प्रक्षाल्य गण्डूषैरम्भसा च मुखं प्रक्षालयेत्। सकृदाचम्य प्राङ्मुख उदङ्मुखो वा भूत्वा मध्यमाङ्गुलिसदृशस्थूलेन द्वादशाङ्गुलिपरिमितदीर्घेण त्वक्सहितेनार्द्रेण क्षीरिणा मालतीकरवीरापामार्गविल्वजानामेकेन केनचिद् दशनशोधोपयोगिना काष्ठेन दन्तशुद्धिं काष्ठान्तरेण च जिह्वाशुद्धिं विधाय तत्काष्ठं भङ्क्त्वा शुभे स्थले निखनेत्। ततो दशगण्डूषान् कृत्वा आचम्य प्रयतो महानदीषु तडागे वा स्नायात्। एतत् वारुणनामकं स्नानम्। जलस्नानाशक्तौ आर्द्रवाससा उत्तमाङ्गादिपादान्तं मार्जनं करणीयम्। एतद् ब्राह्मनामकं स्नानम्। एतदभावे अग्निमूर्धेत्यादि जाबालोक्तसप्तमन्त्रैः त्रिपुण्ड्रधारणपूर्वकं भस्मना स्नायात्। इदञ्चाग्नेयं स्नानम्। गवाङ्घ्रिरजसा वायव्यनामकं स्नानं वा कुर्यात्। अथवा सातपेन वर्षेण दिव्यनामकं स्नानं कार्यम्। उताहो आत्मविज्ञानरूपेण जलेन मानसनामकं स्नानं विधेयम्। अस्मान्मानसस्नानान्न किञ्चिद्वरम्। तस्मादात्यन्तिकी शुद्धिर्भवति। एवं स्नात्वा देवान् ऋषीन् पितॄंश्च तर्पयित्वा स्वसूत्रोक्तमार्गेणाचम्यापोहिष्ठेत्यादिभिस्त्रिभिर्मन्त्रैः कुशोदकैश्चात्मानं संप्रोक्ष्य सूर्यश्चेत्यादिमन्त्रेणाभिमन्त्र्य पीत्वा दधिक्रेत्यादिना पुनराचम्य आपो हिष्ठादिभिः पुनः स्वं संप्रोक्ष्य प्रदक्षिणीकृत्य जलाञ्जलिमादाय गायत्र्याभिमन्त्र्य सूर्यायार्घ्यं दत्त्वा त्रिः प्रदक्षिणीकृत्य नदीतीरे शुद्धदेशे वा दर्भाद्यासने उपविश्य शास्त्रानुकूलं प्राणायामत्रयं कृत्वा सन्ध्यामभिध्यायेत्। सन्ध्यावन्दनहीनः पुरुषः सर्वदाऽशुचिर्भवेत् श्रौतस्मार्तसदाचारेऽधिकारी न स्यात् नरकगामी

च भवेत् । सन्ध्यावन्दनेन द्विजातयः कर्मबन्धनाद् विमुक्ता भवन्ति । सन्ध्याकर्मणि द्विजैः अष्टोत्तरसहस्रमष्टोतरशतमष्टाविंशतिर्वा गायत्रीजपनीया । अर्धोदयवेलायां प्राणायामपूर्वकं स्वसूत्रोक्तेन मन्त्रेण श्रौतैः सूक्तैः स्मार्तैः स्तोत्रैश्च सूर्य उपास्यः । ओं स्वस्वोल्काय शान्तायेत्यादिमन्त्रेण तस्य प्रणतिर्विधेया । स्वसूत्रेण पावके समिदाधानं कुर्वीत । मेधावीत्यादिमन्त्रेण सिद्धभस्मना त्रिपुण्ड्रधारणं वेदोक्तवर्त्मना पत्रपुष्पादिभिर्नित्यं शिवलिङ्गार्चनम् तच्छेषत्वेन विष्णुब्रह्मदेवान्तर-पूजनञ्च कुर्यात् । समिदाधानहीनपुरुषः सप्ताहात् पतितो भवेत् । गुरून् देवान् प्रदातॄन् नमस्कारादिभिः पूजयेत् । ततः आचार्यमुखतः प्रेमतोऽध्ययनं कार्यम् । येन वेदचतुष्टयमाचार्यमुखादधीतं तस्य जीवनं सफलम् । गुरुपूजनं कार्यम् । ब्रह्मचर्यमाचरणीयम् । अधीतेन वेदत्रयेण रुद्रो, वेदद्वयेन विष्णुरेकेन च ब्रह्मा प्रसीदति । अध्ययनवद् अध्यापनमपि कार्यम् । पाठधारणमात्रेण ब्राह्मण्यं पुष्कलं भवति मोक्षावाप्तिश्च । धर्मशास्त्रं वेदाङ्गानि च चिन्तनीयानि । न्यायेन अर्थः साधनीयः । अतिथयो ब्राह्मणाश्च प्रसन्नमनसा सत्कार्याः ।

**मध्याह्नकृत्यम्—**

मध्याह्ने मृत्पिण्डेनैकेनामलकसमेन शिरस्तथैकेन नाभेरुर्ध्वं चतुर्भिर्नाभेरधः षड्भिः पादौ प्रक्षाल्य तथैव गोमयपिण्डेनाङ्गमनवलिप्य पुनस्तथा मृत्पिण्डेन देहं प्रक्षाल्य पुनराचम्य वारुणैर्मन्त्रैः शुद्धं जलमभिमन्त्र्य तोयमध्ये जलाधिदेवं ध्यायन् स्नायात् । स्नात्वाचम्य अन्तर्जले द्रुपदानाम गायत्रीं सकृद् प्रजप्य 'मृत्तिके हर मे पापम्' इति मन्त्रेण मृत्तिकां शिरसि धारयित्वा पुनः स्नायात् । ततो जलमञ्जलि-नादाय मन्त्रेणाभिमन्त्र्य मूर्ध्नि निक्षिपेत् । पुनश्च स्नात्त्वाऽऽचमेत् । केचित्प्रातः स्नानवन्मध्याह्नस्नानमप्याहुः । ततः पूर्वोक्तरीत्या प्राणायामादिकं सर्वं विधाय करमालया शङ्खमणिपुत्रकीवपद्माक्षस्फटिककुशग्न्थिरुद्राक्षमालाभिर्वा यथाशक्ति यथा संख्याकष्टोत्तरशतं वा सावित्रीं जपेत् । स्वसूत्रोक्तरीत्योपस्थानं च कुर्यात् । एतासु मालासु रुद्राक्षस्य माहात्म्यं सर्वश्रेष्ठम् जाबालमुनिनाऽन्यैश्च साक्षाच्छिवेनोदितं तत् । अङ्गुल्या जपेऽष्टगुणं शङ्खमणिभ्यामष्टोत्तरशतगुणं पुत्रजीवेन शतत्रयगुणं पद्माक्षेण सहस्रगुणं स्फाटिकेनायुतत्रयगुणं कुशग्रन्थ्या कोटिगुणं रुद्राक्षेणानन्तगुणं फलं भवति । तस्माद् रुद्राक्षेण सर्वप्रयत्नैर्जपः कार्यः । उच्चैर्जपादुपांशुर्वरिष्ठस्ततो जिह्वाग्रजः शतगुणस्ततो मानसः सहस्रगुणो भवति । रजस्वलां चाण्डालीं सूतिकां पतितं बौद्धं च दृष्ट्वाऽऽचम्य मन्त्रश्च जप्त्वा स्वसूत्रानुसारेण ब्रह्मयज्ञः करणीयो देवर्षिपितृगणाश्च तर्पणीयाः ।

**सायंकालिककृत्यम्—**

स्वसूत्रोक्तविधानेन सायंकृत्यं करणीयम् । प्रत्यहं नित्यकर्मणामनुष्ठानेन

दुरितक्षयश्चित्तशुद्धिश्च जायते। यया च चित्तशुद्ध्या संसारे दोषदृष्टिरुपजायते यतश्च संसारविरक्तिर्भवति। विरक्तस्यैव संसारात्संन्यासः स्यात्। विरक्तिश्च द्विधा-तीव्रा तीव्रतरा च, तत्राद्यायां जायमानायां योगिना कुटीचकनाम्नि संन्याससंप्रदाये संन्यासः कार्यः। शक्तौ सत्यां तीव्रायां विरक्तौ हंसनामके मुमुक्षुः संन्यसेत् ततः साक्षाद् विज्ञानसाधनात्मके परमहंसाभिधेये संन्यसेत्। परमहंसः मोक्षैकसाधनं ब्रह्मविज्ञानं वेदान्तश्रवणादिना अभ्यसेत्। ब्रह्मविज्ञानलाभाय परमहंसाख्य एव संन्यासः। संन्यासे शान्तिदान्त्यादिसर्वसाधनसंपन्नताऽपेक्षिता वर्तते। बाह्येन्द्रियाणां विषयेषु व्यावृत्तिः शान्तिः, मनसो व्यावृत्तिर्दान्तिः, सहिष्णुता तितिक्षुत्वम् समाहितत्त्वमेकाग्रता। शास्त्रोक्तरीत्या कर्मत्यागसंकल्पः साक्षात्-संन्यासः। स च कर्मसंत्यागद्वारा अविद्यानाशके शुद्धे ब्रह्मवेदने उपकरोति, शान्त्यादयः प्रवृत्तिव्यावृत्तिद्वारेणोपकुर्वन्ति, अन्यानि सर्वाणि कर्माणि दृष्टद्वारेणोपकुर्वन्ति नादृष्टद्वारेण, तथाप्यङ्गानि भवन्ति, अपि च ज्ञानोत्पत्तिप्रतिबन्धकं पापसमूहं घ्नन्ति। तस्मात् शान्तिदान्तिसंन्यासतितिक्षुत्वमेकाग्रतागुरुभक्ति शिवभक्त्यादीनि ज्ञानसिद्धयेऽङ्गानि श्रुतिसिद्धानि सन्ति। मुमुक्षुभिः परमहंसैः सर्वप्रयत्नेनाप्रमादेनातन्द्रया श्रद्धया च ज्ञानार्थं कर्म कर्तव्यम्। कर्मणा विना विज्ञानं न सिद्ध्यति। पापापनोदनार्थं नैमित्तिकं च कर्तव्यम्। पापिष्ठस्य ज्ञानं नोत्पद्यतेऽनर्थं च जायते। अतः नैमित्तिकं श्रद्धया कार्यम्। नित्यनैमित्तिककर्मभ्यां वरो नास्ति कश्चनोपायो ज्ञानार्थम्।

## दशमोऽध्यायः (निषेधमुखेन आचारविमर्शः)

**ब्रह्मचारिणो वर्ज्यविषयाः—**

यज्ञोपवीतसंस्कारसंपन्नैर्द्विजैर्गुरोरन्तिकमाश्रित्य प्रत्यहं सर्वं आचारो ग्राह्यः। अनुज्ञापालकैः स्वाचार्यमनिरीक्षमाणैर्वेदो नाध्येतव्यः। शयानो गच्छन् तिष्ठन् वा कदाचिद् वेदवादिनामुपेक्षां परिवादश्च न कुर्यात्। गुरुसन्निधौ यथेष्टासनग्रहणं, कर्णप्रावरणं, चरणप्रसारणं, छत्रपादुकाधारणं, दानग्रहणं, हास्यं, गुरोर्नामग्रहणं न कार्यम्। गुरोर्निन्दा न श्रोतव्या, कर्णौ पिधाय च तद्देशाद्दूरे गन्तव्यम्। रूक्षां कल्याणरहितामनृतां दीर्घसूत्रितां वाणीं न वदेत्, हर्षशोककामप्राणिहिंसाक्रोधलोभदम्भादयो विशेषतो वर्ज्याः। रोगरहितैरष्टमीषष्ठीचतुर्दशीजन्मपर्वतिथिषु सूर्यगुरुभौमशुक्रवारेषु अभ्यङ्गो न कार्यः। अक्षनृत्यगीताशिष्टजनसम्पर्कादिकं परिहर्तव्यम्। द्विजैर्वेदाध्ययनं विना स्नानं (समावर्तनं) न कुर्यात् नापि गुरोरनुज्ञां विना, तथा चीर्णव्रतैरपि न कर्तव्यम्।

**गार्हस्थ्ये वर्ज्यविषयाः—**

रूपलावण्यहीनां गोत्रानुकूलहीनां स्वाधिकां भार्यां न गृह्णीयात्। पूर्णिमाचतुर्दशीषष्ठ्यष्टमीषु मैथुनं न कार्यम्। प्रमादासत्याहितोच्चारणं, चौर्य्यं, राजन्यवैश्यशूद्रपतितान्त्यजकृतध्नेभ्यो धनधान्यादिग्रहणं, शूद्रतान्त्रिकाधार्मिकैर्व्याप्ते देशे निवासः, विवादः, मात्सर्यमात्मप्रशंसा, अशिष्टैः पापिभिश्च सह भाषणं चेत्यादि सर्वं द्विजैर्हितमिच्छद्भिर्न कार्यम्। चौरपतितौ प्रति चौरपतितशब्दौ न वाच्यौ, वचनात् तुल्यदोषता स्यात्। असत्यभाषणे द्विगुणो दोषो भवेत्, तस्माज्जनसभायां दृष्टश्रुतदोषकथनं तत्स्मरणं च वर्ज्यम्। ब्रह्मघ्नचौरसुरापगुरुतल्पगैः सह वासो न विधेयः। निमित्तं विना मध्याह्नवर्त्ती, जलस्थोऽस्तगामी सूर्यश्चन्द्रो वा न द्रष्टव्यः। इन्द्रधनुः सन्ध्यां गां विद्युतं महावृष्टिं शुक्रादिग्रहान् दम्पत्योरालिङ्गनं मैथुनञ्च परस्य विण्मूत्रोत्सर्जनं नग्नां स्त्रियं प्रेतं क्रुद्धमुखाचार्यं प्रेम्णा परभार्यां रजस्वलामुदक्यां मत्तांश्च नैक्षेत। भार्यापुत्रबन्ध्वाचार्यान्यजन्तुभिः सह न भोक्तव्यम्। जन्तून्न लङ्घयेत् नाप्यधितिष्ठेत्, शूद्राय वेदमुखेन परिज्ञानं न दद्यात्। विभवे सति जीर्णवस्त्रादिभिरात्मानं विशेषतो भार्यां पुत्रांश्च नावमन्येत। सर्वैरस्त्रिभिः शस्त्रिभिर्गजैरश्वैर्मूर्खैश्च सह सम्पर्को न कार्यः। जले नग्नो न तिष्ठेत्। अञ्जलिना जलं न पिबेत्, तटाके सति कूपस्नानं न कुर्यात्। स्नानं देवपूजां भिक्षादानञ्च विना भोजनं न कर्तव्यम्। बालातप-चाण्डालप्रेतधूमापस्मारादिग्रस्तान् दूरतः परिवर्जयेत्। सन्ध्याकाले स्वापमैथुनगमनाध्ययनानि न कार्याणि। चरणेन चरणप्रक्षालनं, ब्राह्मणनृपवैश्याग्निस्पर्शः, विना प्रयोजनं जलस्पर्शः, मुखेन वामेन हस्तेन जलपानमयोनौ रेतस्त्यागः, शुक्रस्य पानं च बुधैर्न कार्याणि।

श्मशानचर्मरोमास्थिकपालादीनां परकीयवस्त्रपादुकाछत्राणाञ्च स्पर्शो न कर्तव्यः। वेदवादो न त्याज्यः। वैदिको वेदबाह्यमागमं वैष्णवमन्यं वा न गृह्णीयात्। श्रौतस्मार्तानुगो वेदबाह्यागमपरान् जनान् न स्पृशेत, सति स्पर्शे सचैलं स्नायात्। वेदबाह्यागमाचारः प्रशस्तोऽपि नोपास्यः। त्रिपुण्ड्रभस्मावगुण्ठनरुद्रलिङ्गार्चनादि न त्यजेत्। ख्यातिलाभाय वैष्णवागमोक्तं पुण्ड्रान्तरं न धारयेत्। यज्ञं दानं तपः श्रुतिस्मृत्युक्तं कर्म च न त्यजेत्। वेदधर्मशास्त्रप्रतिषिद्धं कर्म न समाचरेत्। सर्वेषु देशेषु श्रुतिस्मृतिविहितः प्रसिद्ध आचारः प्रमाणं, सोऽपि पुण्यदेशेषु मध्यदेशादिषु-प्रशस्तं प्रमाणम्, अन्यत्र प्रमाणमप्रमाणञ्च। ब्रह्मेन्द्रप्राजापत्यमनुष्यलोकेषु श्रुतिस्मृतिविरुद्धोऽपि आचारः प्रवर्तते। देवमुनिसज्जनानां च दुराचारः कदाचिद् दुर्निवारकः प्रवर्तते। यथा प्रजापतिसुरपतिवशिष्ठपराशराणां स्वपुत्रीगौतमपत्नी-उर्वशी-मत्स्यगन्धाविषयकप्रस्खलनं जातम्। अतः सर्वत्र दुराचारसंभावना वर्तते। पुण्येन श्रौतस्मार्तसदाचारे प्रवृत्तिस्तद्विरुद्धे कर्मणि पापिनां प्रवृत्तिर्भवति। वेदवेदाङ्गधर्मशास्त्रपुराणमहाभारतदेशजातिकुलाचारेषु परस्परविरोधे जाते निःशंकं

वेदानुगामिभिर्वेदविपरीतं सर्वं त्याज्यम् । वेदानुकूलमेव शास्त्रोक्तं ग्राह्यम् । अतीन्द्रियार्थधर्माधर्मादिविज्ञाने वेद एव प्रमाणम् तन्मूला स्मृतयश्च, नहि पुरुषोदिता आगमा पञ्चरात्रादयः प्रामाण्यमादधते । तेषु वेदोक्तसदाचारविपरीता ये आचाराः सन्ति ते सर्वे तत्सम्प्रदायदीक्षितानां कृते सन्ति तथा ये वेदाविरुद्धा आचारास्ते सर्वे शुद्धस्य कृते भवन्ति । केचन, तेषु यो वेदानुकूलाचारस्तं वैदिकानां कृते वाच्छन्ति । वेदमूलस्मृतिपुराणकाराः क्वचित् कदाचित् स्वीयग्रन्थेषु तन्त्रार्थं तन्त्रानुकूलं धर्ममपि कथयन्ति, सोंऽशस्तन्त्रावलम्बिभिर्ग्राह्यः, पुराणधर्मशास्त्रयोर्योंऽशः श्रुतिविरुद्धः स तन्त्रार्थ एव । तस्मात् वेदप्रमाणेन वेदोक्तमेव ग्राह्यम् ।

## एकादशोऽध्यायः

महादेवविष्णुब्रह्मदेवान् पापकर्मिणः सदा मोहेन निन्दन्ति तथा महादेवसममन्यं मन्यन्ते । ते सर्वाधिकं जड़चेतनजगन्मूलकारणं साम्बं न स्वीकुर्वन्ति । वेदान्तजन्यमात्मज्ञानं तत्साधनं शान्तिदान्त्यादि यज्ञं त्रिपुण्ड्रं भस्मावगुण्ठनं निन्दन्ति, ऊर्ध्वपुण्ड्रं त्रिशूलं वर्तुलं चतुरस्रकं ललाटे धारयन्ति । शङ्खचक्रगदापद्मवज्रपाशाङ्कुशादिभिरङ्किता भवन्ति । वैधं सकलं कर्म परित्यज्य निषिद्धं कर्म कुर्वन्ति । वेदवेदाङ्गस्मृतिपुराणानि परित्यज्य पञ्चरात्रे कापाले अपरेषु च पाषण्डेषु दीक्षिता भवन्ति । काशीकुरुक्षेत्रपद्मपुराणि विहाय कीकटादिषु निवसन्ति । वश्याकर्षणविद्वेषमारणादिषु यजन्ते, वेदबाह्यं सेवन्ते, अभिषिक्तं नृपतिं, बहुश्रुतं ब्राह्मणं, निर्भयं राष्ट्रं वेदमर्यादां च बाधन्ते ।

## द्वादशोऽध्यायः (अभक्ष्य-विवेचनम्)

अन्नदोषादेव चित्तस्य कालुष्यं जायते, कलुषितचित्तानां जनानां धर्मोपेतं वस्तु समीचीनतया न भासते, अपितु धर्मोऽधर्मतया अधर्मो धर्मतया च विभाति, स्वयं प्रकाशमानं ब्रह्मापि न भासते नापि कदाचिद् ब्रह्मविद्यानुराग एव जायते । अत्र किञ्चिदन्नं परब्रह्मप्रकाशप्रतिबन्धकं किञ्चिद् ब्रह्मविषयज्ञानोत्पत्तिप्रतिबन्धकं किञ्चित्परमेश्वरभक्तिबाधकं किञ्चिच्च परब्रह्मरुद्रविष्णुब्रह्मार्कादिदेवविषयकध्यानस्य तद्विभूतिसाधनस्य यज्ञदानतपःकर्मणां विज्ञानसाधनस्य च प्रतिबन्धकमस्ति । किञ्चिच्च ब्राह्मणहत्यायाश्चौर्यस्य कादम्बरीपानेच्छायाः पापिष्ठसंसर्गेच्छाया वेदपरित्यागाभिलाषस्य पाषण्डधर्मानुष्ठानस्य वेदोक्तसदाचाराभावस्य वा कारणं भवति । किञ्चिद् विशेषतः तान्त्रिकविज्ञानस्य वैदिकविषयकाज्ञानस्य तान्त्रिकविज्ञानश्रद्धाया वैदिकविज्ञानश्रद्धाभावस्य, तान्त्रिकसम्मानकर्मणां वैदिकसम्मानाभावस्य वा कारणं वर्तते । किञ्चिदन्नं वेदप्रामाण्यसन्देहकारणं नास्तिक्यकारणं

तन्त्रविश्वासकारणं मौर्ख्यकारणं देवद्रोहादिकारणं रागादिदोषकारणं भ्रान्तिकारणं वास्ति। अतो बुद्धिमता निषिद्धमन्नं सर्वथा परिवर्जनीयम्।

अनुपवीत-यति-यतिप्रेरित-नेत्रहीन-पतित-वेदविहीन-वेदबाह्यालम्बि-वेददूषक-दैवत-श्रौतस्मार्तसदाचारविमुख-कृतघ्न-महारोगाक्रान्त-परदारलम्पट-पिशुन-कन्याविक्रयि-यतिनिन्दक-पापप्रसक्त-श्रद्धाविहीन-भार्या-श्वशुर-दरिद्र-मूक-निर्मर्याद-मूर्ख-प्रजारक्षाविमुखनृपति-पुरोहित-शान्तिरहितवैश्य-मरणाशौचाक्रान्ताभिशप्त-पाषण्डि-शूद्र-तक्ष-विट-नर्तक-कर्षि गण-गणिका-शस्त्रोपजीवि-ध्वजि-रजक-गान्धर्वायस्कार-सूतकियाज्येतर-याजक-रक्षाविहीनबाल-तैलकार-चित्रकार-चिकित्सक-पौनर्भव--मूढ-वार्धुषिक-स्वर्णकार-किरात-दूतिक-देवतानिन्दकानामन्नं नोपादेयम्। भीतरुदित-क्षुत्पीडित-श्राद्ध-सूतिक-बन्ध्या-वृथापाक-शस्त्रास्त्रकार-पारशव-कारुक-पुनर्भू-लोभि-विधवा पिशुनानामन्नभक्षणे वत्सरान्ते पतितो भवति। सोमसुरामांसविक्रयिणां शिवद्रोहि-यतिनिन्दक-विज्ञानदूषकदेवभस्मत्रिपुण्ड्रभ्रातृदूषकाणां दिव्यायुधदधानानाश्चान्नभक्षणे सद्यः पतितो भवति। आपत्तावपि द्विजैर्दासकुलमित्रगोपालानां कुधनिनः कुम्भकारस्य कर्षकस्य अन्येषाश्चान्नं न भोक्तव्यम्। सति भक्षणे प्रायश्चित्तं कर्तव्यम्। पिण्याक—( तिलखलि ) सक्तु-तैल-गव्य-तक्रादीनि वस्तूनि शूद्रादेव संग्राह्याणि न द्विजेभ्यः। वृन्ताक-गृञ्जन-लशुन-ग्रामकुकुटानां भक्षणं ब्राह्मणैर्न कर्तव्यम्। व्रतिभिश्च औदुम्बरालाबुगुम्फलकिंशुकादीनि न भक्ष्याणि। केशकीटादिदुष्टं श्वकाकादिदूषितं भस्मसंस्कृतञ्च न भक्षणीयम्। रजस्वलाचाण्डालप्रमुखैरपवित्रैर्जनैर्दृष्टमन्नं पर्युषितं वत्सहीनाया गोःक्षीरं सन्धिनीक्षीरमौष्ट्रमाविकं क्षीरञ्च ब्राह्मणैर्न भोक्तव्यम्। रोगिणां कृते त्वभक्ष्यमपि भक्ष्यं भवति सुरां वर्जयित्वा।

भक्ष्यस्य भक्षणेन चित्तशुद्धिर्जायते। तस्मात् पारमेश्वरं ज्ञानं प्रमाज्ञानं भवति। एवं वेदवाक्यात् पारमेश्वरविज्ञाने जाते हृदयग्रन्थिर्भिद्यते।

## त्रयोदशोऽध्यायः ( प्रायश्चित्तनिरूपणम् )

**ब्रह्महत्याप्रायश्चित्तम्—**

ब्रह्महत्याकारी पुरुषः तज्जन्यपापविनाशाय निर्जने शुद्धे नदीतीरे वसेद् वा शुष्कतृणकाष्ठैः कुटीं निर्माय निवसेत्, शवशिरोध्वजं कृत्वा विप्रेभ्यो भिक्षामादाय अतितापवान् सन् अपराह्णे मौनी भूत्वा सकृदेव भुञ्जीत। प्रत्यहं त्रिवारं स्नानं सर्वदा विप्रार्चनं गोसेवां पिप्पलसंरक्षणं मानवदोषप्रशंसां फलमूलाशनं च लज्जाविहीनो जितेन्द्रियः सन् कुर्यात्। एवं क्रियमाणे सति द्वादशवर्षैः ब्रह्महत्याजन्यपापं विनश्यति। प्रायश्चित्तमिदमबुद्धिपूर्वकस्यास्ति। रहस्यमयपातकस्य प्रायश्चित्तन्तु एकमासपर्यन्तं प्रत्यहमालस्यवर्जितः सन् त्रिपुण्ड्रं विधाय भस्मलिप्तो भस्मशायी

भूत्वा सर्वदा 'नमः शिवाय' इति मन्त्रमोङ्कारं वा जपेत् । अन्येषां रहस्यमयपातकानामपि पूर्वोक्तप्रकारेण प्रायश्चित्तम् । एवं प्रायश्चित्तम् कुर्वतां पातकिनां मरणादेव शुद्धिर्न मार्गान्तिरेण ।

**सुरापानप्रायश्चित्तम्—**

सुरापी अग्निवर्णां सुरां तादृशं कृतं गोमूत्रं वा पीत्वा सुरापानदोषाद् मुच्यते । वैदिकविप्रः स्वेच्छया सुरां पीत्वा सद्यः स्वयं पतति स्ववंशं च पातयति । सुरापानजन्यपापस्य षोडशीं कलामपि ब्रह्महत्यादिपातकं न भजते, तस्माद् द्विजैः सर्वदा सुरापानं त्याज्यमेव ।

**स्तेयप्रायश्चित्तम्—**

स्तेयी ( चौरः ) खलु विप्रकीर्णकेशी मुसलमादाय राजानं गत्वा तत्र स्वकर्म कथयित्वा राज्ञा हतः सन् स्तेयदोषाद् विमुच्येत ।

**गुरुदाराभिगमनप्रायश्चित्तम्—**

गुरुदाराभिगामी तत्पापविनिवृत्त्यर्थं स्वयं स्वस्य सवृषणशेफमुत्पाटयाञ्जलौ निधाय अनशनः सन् वाग्यतो दक्षिणां दिशं गत्वा एकवर्षपर्यन्तं जितेन्द्रियः तप्तकृच्छं व्रतं चरेत् ।

दुहितृ-स्वसृ-स्नुषाऽभिगमने तप्तकृच्छ्रम् कर्तव्यम् । मातृस्वसृमातुलानी-पितृस्वसृ-भागिनेयीनामभिगमने कृच्छ्रातिकृच्छ्रव्रते चान्द्रायणं तीर्थस्नानं वा कर्तव्यम् । भ्रातृभार्याभिगमने चान्द्रायणचतुष्टयं, मातुलसुताभिगमने चान्द्रायणं, मित्रभार्याभिगमने तप्तकृच्छ्रं, चाण्डालीगमने तप्तकृच्छत्रयं कृच्छं सान्तपनं वा, कुयोनिषु रेतःस्रावे कृच्छ्रसान्तपनम्, आस्यमैथुने चान्द्रायणद्वयं, गोमैथुने चान्द्रायणद्वयं, क्षत्रियभार्याभिगमने प्राजापत्यद्वयं कृत्वा ब्राह्मणः शुद्धिमवाप्नुयात् ततः स्ववृत्तिं च कर्तुं प्रभवेत् । ब्रह्मचारी अवकीर्णश्च नैॠतपशुमालभेत् । भिक्षुर्द्विजस्त्रीगमने अवकीर्णिव्रतं चरेत् । द्विजो वैश्याभिगमने प्राजापत्यव्रतं पौनःपुन्येन पतितागमनेऽपि प्राजापत्यं विप्रकन्याभिगमने चान्द्रायणं चरेत् । उदक्यागमने त्रिरात्रेण विशुद्धिः । बारम्बारं रजस्वलाभिगमने कृच्छ्रचान्द्रायणं नटशैलूषभार्याभिगमने चान्द्रायणत्रयं कुर्यात् । सर्वपापनोदनाय साम्बं शिवं हृदि यामार्धं मुहूर्तं वा ध्यायेत् सप्रणवं पञ्चाक्षरमन्त्रं (नमः शिवाय) च जपेत् । तद्ध्यानेनैव पापकाननं दह्यते । रुद्रस्य ध्यानेन बहवः संसाराद् विमुक्ता अभवन्, किं पुनः पापात् । यद्यपि विष्ण्वादिदेवताध्यानमपि पापविनाशकं किन्तु शिवध्यानसमतां लब्धुं न शक्तम् । अतो विहाय सर्वान् सर्वादिभूतस्य शङ्करस्य ध्यानं कर्त्तव्यम्, यतो हि तेन, विना यत्नमेव पापनिवृत्तिः सिध्यति ।

## चतुर्दशोऽध्यायः (प्रायश्चित्तनिरूपणम्)

पापकाननं दग्धुं ज्ञानदावानलः सर्वैर्यत्नैः सम्पाद्यः। जाते हि ज्ञाने क्षणादेव सर्वं कालुष्यं नश्यति, यदि कश्चन प्रतिबन्धको न स्यात्। यथा सुदीप्तोऽप्यग्निः-सत्सु चन्द्रकान्तमणिमन्त्रौषधिषु प्रतिबन्धकेषु काष्ठानि दग्धुं न समर्थः। तत्र ज्ञानस्य प्रतिबन्धकारणे द्वे-असंभावना विपरीतभावना च। ते च द्वे श्रवणमननिदिध्यासनैर्निवर्तते। यथा प्रतिबन्धरहितोऽग्निर्दहति तथैव निवृत्तप्रतिबन्धो ज्ञानाग्निः सकारणं पापं दहति। उपक्रमोपसंहाराभ्यासापूर्वफलार्थवादोपपत्तिभिः षड्भिर्लिङ्गैर्वेदान्तवाक्यस्य तात्पर्यनिर्णयादधिकारिणः सर्वसाधनसंपन्नस्य मुमुक्षोः वेदान्तवाक्यैः संसाररोगमहौषधं प्रत्यग्ब्रह्मैक्यविज्ञानं जायते। तत्र मननिदिध्यासनापेक्षया विज्ञानकारणस्य श्रवणस्य प्राधान्यमस्ति, ज्ञानोत्पत्तौ श्रवणस्यान्तरङ्गत्वादन्ययोश्च ताटस्थ्यात्। शान्तिदान्तितितिक्षोपरत्यादयः इतिकर्तव्यताकोटयोऽपि तटस्थ एव। भगवतो रुद्रस्य प्रसादस्तु तत्रात्यन्तान्तरङ्गोऽपराणि सर्वाणि तदर्थान्येव। तत्र साम्बस्य शिवस्य प्रसादो नाम वाक्यलक्षणसामग्रीप्रवृत्तिजन्यस्य वृत्तिज्ञानस्य चिदभिव्यक्तियोग्यता, सा च योग्यता देहिनां तीव्रे तीव्रतरे मन्दे शाम्भवे प्रसादे सति वृत्तिसाक्षितयाऽभिजायते। स च चिदात्मा वृत्तेः साक्षिरूपः वृत्तिप्रागभावस्थितिरूपः बुभुत्सायां सत्यां तथाऽज्ञोऽस्मीत्याभासाज्ञातवस्तुनोऽसत्यालम्बनत्वेन सर्वजडस्य चापि तथात्वेन स सत्यः, सर्वदा प्रेमास्पदत्वतः आनन्दस्वरूपः, सर्वार्थसाधकत्वात् सर्वसंबन्धवत्वाच्च शिवसंज्ञः जीवेश्वरत्वादिविरहितः केवलः स्वप्रकाशः शिवः वृत्तौ सत्यामात्मानं बुभुत्सोः प्राणिनः स्वयं साक्षाद् अभिव्यक्तो भवति।

शिवादिनामहीनस्य शिवध्यानशिवभक्तिविहीनस्य त्रिपुण्ड्रादिषु श्रद्धाहीनस्य च पुरुषस्य शुद्धज्ञानं मुक्तिश्च न सिध्यति। शान्तिदान्त्यादिसत्त्वेऽपि त्रिपुण्ड्रधारणादीनि विना रुद्रप्रसादं न भविष्यन्ति। यथा विशिष्टव्यक्तिषु यज्ञदानाद्यनुष्ठानं दुर्लभं तथैव श्रौतधर्मेषु त्रिपुण्ड्रभस्मावगुण्ठनरुद्रलिङ्गार्चनान्यपि दुर्लभान्येव। त्रिपुण्ड्रधारणभस्मावगुण्ठनयोर्दुर्लभत्वादेव नित्यानन्दनिरञ्जनतः शिवस्तत्सर्वं साधकार्थमकरोत् अतोऽनिष्पन्नेन स्वलाभाय यत्नतो धार्यमिदम्। सर्वाङ्गनिष्ठस्य पुरुषस्य वेदवाक्यात् प्रत्यग्ब्रह्मैकगोचरा या शुद्धा मानसी वृत्तिरुदेति तस्यां च स्वयंसिद्धा शाङ्करी चिद् अभिव्यक्ता भवति, तदेवाज्ञाननाशकं ब्रह्मविज्ञानमस्ति, जाते च तस्मिन् सर्वं मिथ्याज्ञानं निवर्तते। यथा घटज्ञाने जाते घटाज्ञानं निवर्त्तते तथैव ज्ञाने जाते अज्ञाने नाशे सति सर्वाणि अज्ञानकार्याणि नश्यन्ति। कर्त्रादिकारकसमूहोत्पत्तिस्तु कर्मतो भवति, कर्माभावे कुतः कर्त्रादिकारकोत्पत्तिः। देहेन्द्रियादिसङ्घाताभिमानस्था एव कर्तृता भवति। वस्तुतो ब्रह्मभूतस्य

निष्क्रियस्य जीवस्य कर्तृत्वं भोक्तृत्वं च कथं स्यात्। यदि कर्तृत्वं कृत्यं चात्मनो वास्तवं भवेत् तर्हि केनोपायेन न निवर्तेत। शरीराद्यभिमानेन अहमिति, कृशोऽहं, ब्राह्मणोऽहं, गृही, ब्रह्मचारी, भिक्षुकोऽहम्, कृष्णोऽहमित्यादिप्रतीतिभ्रान्त्या निर्विशेषः सन्नपि मन्यते। स चैकोऽप्यात्मा नभसो घटाकाशमठाकाशादिभेदवत् सर्वेषु देहेषु भ्रमाद् भिन्न एव भासते, अक्रियोऽपि जलचलनाद् भास्करचलनवद् भ्रान्त्या सर्वविकारवान् प्रतीयते। यथा अतीवधवलः स्फटिको जपाकुसुमलौहित्यसंक्रान्तत्वात् रक्तो भाति तथैव आत्मापि उपाधिवशात् संसारी भवति। यस्य पुरुषस्यात्मानात्मविवेकप्रकाशो वर्तते तस्य सविधे वर्णाभिमानाख्यं तमः कथं तिष्ठति? यस्य वर्णाश्रमवयोऽवस्थाविशेषप्रतीतिरस्ति तस्य विधयो निषेधाश्च वर्तन्ते, सर्वोपाधिविनिर्मुक्तं सर्वसाक्षिणं चैतन्यं पश्यतः पुरुषस्य कथं शुभाशुभं कर्म तिष्ठति। एवं सर्वबन्धरहितमात्मानं ब्रह्मतया साक्षात्पश्यन् पुरुषं कथञ्च कर्मणा बध्यते? अतो ब्रह्मात्मविज्ञानं सर्वमज्ञानं तज्जनितं निखिलं कर्म तत्फलं च ग्रसति। यज्ज्ञानं समूलं कर्म विनाशयति तदेव सर्वपापानामुत्तमं प्रायश्चित्तम्। एवमात्मज्ञानेन दग्धं सकलं कर्म प्रारब्धकर्मणो भोगं यावदाभासरूपेण भाति। यदा ज्ञानेन दग्धं जगदाभासतया विभाति तदा विद्वान् जीवन्मुक्तो भवति न स भूयो जगति जायते। जीवन्मुक्तिदशायां जीवन्मुक्तो भातमभातमखिलं जगत् पृथक् पश्यन्नपि स्वात्मनैव स्वात्मानं पश्यति। भातं भाति यथा तथाऽभातमपि भाति इति सर्वत्र भानान्वयात् तद् ब्रह्मण एव भानमिति प्रकाशस्याव्यभिचारित्वात्। प्रकाशस्याव्यभिचारेण निखिलं प्रकाशं पश्यतः पुरुषस्य किमपि प्रकाशातिरिक्तं विभाति न वा? तस्मात् सम्पूर्णविज्ञानं सम्पूर्णकर्मनिवर्त्तकं भवति, कारणस्य अज्ञानस्य निवर्तकत्वात्, अज्ञाननाशेन प्रतिकूलतः कर्म न संभवति। सति अज्ञाने कर्तृत्वं प्रवर्तते, कर्तुरेव च शुभाशुभं कर्म प्रवर्तते। अज्ञाननाशे सति तु कथमज्ञानं तज्जन्यं कर्म च बाधते? मूलभूते ज्ञाने स्थिते सति द्वैतं विजायते, पुंसः शोभनाशोभनाध्यासश्च प्रजायते। ततो रागद्वेषौ जायेते, ततश्च देही प्रवर्त्तते। ततो धर्माधर्मौ प्रवर्तेते। धर्माधर्मोपभोगाय शरीरं जायते, एवं नरः चक्रवत् भ्राम्यति। सम्यग् ज्ञाने जायमाने सति अज्ञानं निवर्तते, तन्निवृत्तौ च तन्मूलं समस्तजगन्निवर्तते। अतः संसारनाशाय ज्ञानमेकं समाश्रयणीयम्, अज्ञानानुकूलञ्च सर्वं कर्म हातव्यम्।

ये जनाः सम्पूर्णज्ञानं लब्धुं यतमानास्तिष्ठन्ति, तेषां बहूनि महान्ति पापानि नश्यन्ति, ज्ञानादूर्ध्वं किमपि शुभमशुभं वा कर्म नास्ति। स्वस्वरूपातिरेकेण यद्यस्ति स पशुरेव। वस्तुतो योगिनां कृते आत्मनोऽतिरिक्तं किमपि नास्ति, तदानीमात्मनो भिन्नतया किमपि क्षुब्धं न भाति। यदा च फलदानाय कर्म क्षुब्धं नास्ति तदा आत्मनोऽतिरिक्तं किञ्चिदपि न भासते। परात्मवेत्ता जनः स्वात्मनो

भिन्नतया सर्वं पश्यन्नपि निर्भयः स्वानुभूतितः सर्वं स्वात्मना पश्यति । स्वानुभूतितः स्वात्मनः परमव्याप्तिं पश्यतः शिवो यथा भातेन रूपेण भाति, अखिलं च भासयति तथा तेन रूपेण स्वयमपि तिष्ठति । शिवरूपेण स्वानुभवेन यदा स्वयं केवलं तिष्ठति, तदा तस्य महात्मनो निर्वाणं सन्तिष्ठते । महाव्यापकनिर्वाणस्वरूपे स्वात्मवस्तुनि स्वानुभूत्यैव विश्रान्तो भवति जनः, तदा स स्वयं परदेवताऽस्ति । विश्रान्तिश्च महाक्षोभः प्रकाशाव्यभिचारतो वर्तते, तदा तत्त्ववित्प्रकाशरूपमेव पश्यति । सर्वं जगन्मायामयम्, आत्मा तु साक्षात् सर्वस्यावभासकोऽस्ति । एवं प्रकारेण य आत्मानं विजानाति स ब्रह्मविद् भवति । दृश्यरूपं जगदिदं दृश्यरूपं दृङ्मयं यः पश्यति तथा दर्शनादर्शने हित्त्वा यः स्वरूपेण तिष्ठति स ब्रह्मविद् भवति । इत्थं ज्ञानं यस्य नरस्य वर्तते तस्य पुण्यपापाभ्यां लेपो न विद्यते । एकैकस्य पापस्य यत्प्रायश्चित्तं प्रकीर्तितं तन्महतामपि कर्तुं दुष्करम्, अत इदमद्वैतविज्ञानमेकं सर्वेषां पापानां परोक्षापरोक्षरूपेण साक्षादुन्मूलनक्षमं वर्तते, नैतादृशं किञ्चिदपि श्रुतिस्मृत्युक्तं प्रायश्चित्तं सन्तिष्ठते, नापि ततोऽधिकं वा । तस्माच्छ्रद्धया तत्समाश्रयणीयम् । संक्षेपेण ज्ञातव्यमिदं यज्ज्ञानमेकमेव सहेतुकस्य सर्वस्य पापस्य निवर्तकं सर्वथा उपादेयञ्च । ज्ञानमाश्रितः पुरुषः श्रुतिगुरुपुण्य-शिवप्रसादेन समागतं दुःखं तरति । विमलमात्मज्ञानं विना मनुजः शोकमोहसुख-दुःखसागरं जन्म कथं तितीर्षति । सर्वमेतज्जगदखिलेश्वरः शिवः केशवादयो देवाः त्वमहं सर्वं परब्रह्मेतिविषया मतिः परा ज्ञेया । सा मतिरेव कर्मवृन्दवाडवाग्निरत एव नरा वेदचक्षुषो भवितुमर्हन्ति । सा च परविद्या शिवपादस्मरणेन भविष्यति ।

## पञ्चदशोऽध्यायः (वाराणसीमाहात्म्यम्)

अविमुक्तनामकं वाराणसीक्षेत्रं संसारविषदष्टानां गतिविहीनानां जीवानां महौषधं, संसारविषवृक्षस्य कुठारः, सर्वपापविनिवर्तकमाधिभौतिकमाध्यात्मिक-माधिदैविकं वर्तते । अधिभूतस्थितस्य मायिनो ब्रह्माण्डस्वरूपस्य विराडात्मनो भ्रुवोर्मध्ये स्थितमिदं वाराणसीक्षेत्रम् ।

वाराणसीसेवनेन सर्वपापविनिर्मुक्तः सन् प्राणी शिवं प्राप्नोति कुरुक्षेत्रवास-फलं च लभते । इदं क्षेत्रं देवयजनं, ब्रह्मसदनं, सर्वपापहरं, सर्वलोकप्रसिद्धं, सर्वतीर्थ-श्रेष्ठम्, अव्ययमस्ति । अस्य सेवया सर्वाणि पापनिवर्तकानि तीर्थस्थानानि सेवितानि भवन्ति । संसारनाशनमिदं त्यक्त्वा नरो नान्यत्र निवसेत् क्षणमात्रमपि । अत्र मासपर्यन्तं भागीरथीस्नानेन बुद्धिपूर्वकृतपातकान्मुक्तिः एकवारमेवात्र भागीरथीस्नानं कृत्वा विश्वेश्वरलिङ्गदर्शनेन दिनमात्रोपवासेन श्रद्धया चाल्पदानेन

ब्रह्महत्यादिसकलपातकान्मुक्तिर्भवति। अत्र जपहवनदानकर्मणामनन्तफलं भवति। वाराणस्यां म्रियमाणस्य मोक्षार्थं सकलवेदवेदान्तसाररूपप्रणवात्मब्रह्मणोऽर्थभूतो भगवान् शङ्करः संसारद्रावकः कृपया स्वकीयं परामृतं सच्चिदानन्दस्वरूपं तारकं ददाति, येन त्वरया स प्राणी महाकष्टकरं संसारं परित्यज्य परानन्दो भवति। नहि शिवं विनाऽन्यः कश्चन संसारमोचकोऽस्ति। एवं भूतस्य भगवतः शङ्करस्य क्षेत्रत्वात् विज्ञानोत्पत्तेः कारणत्वात् पापानां नाशकत्वाच्चेदमविमुक्तं मुमुक्षुभिः सदा सेव्यम्, न कदापि हेयम्। पुरा किल वृहस्पतिर्याज्ञवल्क्यादस्य सर्वं वैभवमाकर्ण्य शिवं विज्ञातवान्। बह्वो वैदिका विद्वांसः श्रद्धया आचार्येभ्योऽस्य माहात्म्यं श्रुत्वा विमुक्ता अभवन्। अस्य क्षेत्रस्य माहात्म्यं शिवेनापि वक्तुं न शक्यम्। जाबालोपनिषदपि जानाति वैभवमस्य क्षेत्रस्य इत्यत्र सन्देह एव। पुराणान्यपि लोकरक्षार्थं सर्वदाऽस्य माहात्म्यं वदन्ति। अविमुक्तेऽस्मिन् सेवाहीनोऽपि जनः संसारान्मुक्तो भवति। धीमद्भिरिह जन्मनि जन्मान्तरे वा विज्ञानायेदं क्षेत्रमवश्यमुपास्यम्। वाराणसीसेवनं विना वेदजन्यं विज्ञानं नोत्पद्येत। सहस्रजन्मार्जितपुण्यबलादेव ब्रह्मविज्ञानं जायते। एकैकस्मिन् जन्मनि कृतं सर्वं पुण्यमात्मनि तिष्ठति। एवं क्रमेण अनेककोटिजन्मार्जितपुण्यपरिपाकवशात् सम्यग् ज्ञानं जायते। ये खलु वाराणस्यां तनुं तत्यजुस्तेऽवश्यमेव पूर्वं विज्ञानसाधनं भूरि पुण्यमनुष्ठितवन्त इति विज्ञेयम्। अस्य सेवया निखिलानि पापानि नश्यन्ति। तस्मात् वाराणसीसेवनसदृशं प्रायश्चित्तं न किमपि वर्तते।

वाराणसीमाहात्म्यं वदता भगवता शिवेन पार्वतीं प्रत्यवादि यद् देवि! त्वया मया सेवितमिदं क्षेत्रं समाश्रयणीयमेव जनैः सर्वं परित्यज्य। वरणानासि नामकं क्षेत्रं वेदान्तैः मदीयमपि मुक्तिदं किमुतान्येषाम्। अविमुक्तस्थं विश्वेश्वरं ध्यायिनां वशे निवृत्तविषया अपि पुरुषा आयान्ति तथा तेषां सकलानि च पापानि नश्यन्ति। तस्मादवयवार्थानुकूलेन वरणानासि नामकमिदं वर्तते। अस्यायं भावः निवृत्तपुरुषाणां वरणात् वरणा, पापानां नाशकत्वात् नासि इति।

वरणानासि इति स्थानं देहिनां भ्रुवोर्घ्राणस्य च सन्धौ संस्थितम्। तस्मिन् वरणानासि संज्ञके क्षेत्रे मुमुक्षुभिर्मदीयं प्रतिष्ठितमविमुक्तं चिन्तनीयम्।

केवलेनैतत्क्षेत्रचिन्तनेन सर्वपापानि विलयं यान्ति। एतच्च क्षेत्रं भगवतः शिवस्यास्ति, अत्राम्बया सह शिवः सदा संनिहितोऽस्ति। अतः पापापनोदनाय ज्ञानस्य च सिद्धये तत्र भगवन्तमालस्यरहितः सन् ध्यायेत्। यामार्धं मुहूर्तं वाऽत्र चिन्तनं सर्वपापानां प्रायश्चित्तमस्ति। सर्वेषु प्रायश्चित्तेषु ध्यानं श्रेष्ठम्। तस्मात्सर्वं परित्यज्य तदाचरणीयम्।

पूर्वकाले मुनिरत्रिः याज्ञवल्क्यं प्रति विज्ञानस्य साधनमपृच्छत्तत्र योगीश्वरो याज्ञवल्क्योऽविमुक्ते शिवध्यानमेव विज्ञानसाधनमब्रवीत् । अन्ये च योगिनो ध्यानेन भ्रूमध्ये वरणानासि संज्ञके शुद्धं प्रकाशमण्डलं केवलं भावनागम्यमेवोपदिश्य तदग्रेऽविमुक्तनामकं शिवक्षेत्रमोङ्कारहृदयं सूक्ष्ममभिधाय ततः परं सर्वातीतं चैतन्यं सुखस्वरूपं सकलोत्पत्तिस्थितिसंहारकारकं साम्बं वेदवाचोऽविषयं स्फटिकसमं सोमार्धकृतशेखरं त्रिनेत्रं सस्मितं मुकुटकालदण्डव्याघ्रचर्मोपवीताभरणाभयमुद्रा-समन्वितं विष्ण्वादिनोपास्यमानं परमानन्दं प्रकाशमयं मोक्षैकसाधनं प्राहुः । अन्ये ऐश्वर्याभिलाषिणः ऐश्वर्यसाधनं मामाहुः । केचन मुनिश्रेष्ठाः क्रममुक्तेः साधन-ञ्चाहुः । आचार्योपदेशेन ये जना मामुपासते तेषां सर्वं किल्विषं नाशयामि । भ्रुवो-र्घ्राणस्य यः सन्धिः स द्युलोकस्यापि सन्धिर्विज्ञेयः । तत्र सन्धिसंज्ञे स्थाने सन्धिभूतं मां पूर्वं वैदिकब्राह्मणाः सदा सादरमचिन्तयन् । प्रत्यहं वाराणस्यां मुमुक्षुभिः मोक्षार्थमविमुक्ते साम्बोऽहं सदोपास्यः । हे पार्वति ! अत्र अविमुक्ते सदाहं सन्निहितोऽतोऽस्य अविमुक्तसंज्ञा । प्रसन्नोऽहमुपासकेभ्योऽविमुक्तनामकं स्वात्मविषयं ज्ञानं ददामि । एकवारमपि येऽत्र यजन्ते, तेषां करगता मुक्तिः ।

जाबालशाखिनः सदैवमामनन्ति, जाबालोपनिषच्च प्रधानसाधनमेव ज्ञान-स्याविमुक्तमित्याह । अतः सर्वैर्यत्नैः सर्वपापविनिवृत्तये सर्वधर्ममध्ये केवलमालस्यर-हितेनेदमेव साध्यम् । अथवा [१]पुण्डरीकपुरमेवाश्रयणीयम्, यद्दर्शनमेव मुक्तिकारणं, पुरा तत्रैव मे नर्त्तनं जातम् । अथवा पवित्रे सुवर्णमुखरीतोये कालहस्तिसंज्ञे पर्वते मम दर्शनं कृत्वा सुवर्णमन्यद् वा ब्राह्मणाय दद्यात् । अथवा सेतुबन्धे गन्धमादन-पर्वते, यत्र रामेण स्थापितं मम लिङ्गं वर्तते, तत्र पर्वणि स्नात्वा यथाशक्ति धनं दत्त्वा मम लिङ्गस्य दर्शनं प्रदक्षिणां नमस्कारं च कुर्यात् । अथवा ज्ञानिनं भक्त्या धनेनात्मना च पूजयेत् । यत्र ज्ञानी साक्षात् प्रसन्नो भवति तत्राऽहमपि प्रसन्नः सन्निहितश्च । यथा ज्ञानी सर्वं त्यक्त्वा माम् लब्धवान् तथैवाहमपि तं लब्धवान् । यत्र ज्ञानी तिष्ठति तत्र सर्वाणि तीर्थानि वसन्ति । यो ज्ञानिने कौपीनादिकं ददाति तस्य च शुश्रूषुरस्ति स मेऽत्यन्तं प्रियः ।

पराशर उवाच—

एवमुक्त्वा महादेवो महेश्वरीमालिलिङ्ग, महादेवी च महेश्वरमालिलिङ्ग परमया मुदा । प्रायश्चित्तविहीनानां पापिनां फलभोगाय शिवो नरकानसृजत् । दुरात्मनां शिवे श्रद्धा न प्रवर्तते । पापिनो दुःखभोगार्थं श्वशूकरादियोनिषु उत्पद्यन्ते महादुःखञ्च प्राप्नुवन्ति । अतः पापनिवृत्तये प्रायश्चित्तमाचरणीयम् ।

---

१. 'पुण्डरीके जैमिनीशः' ( ललितागम–ज्ञानपादे–प्रादुर्भावपटले ) ।

## षोडशोऽध्यायः ( पूजाविधिः )

सर्वकारणस्य त्रिमूर्त्तिश्रेष्ठस्य सच्चिदानन्दस्य रुद्रस्य पूजा केवलं ज्ञानमेव। सा च पूजा रुद्रप्रसादादेव आस्तिकस्य कृते सफला भवति, न तु नास्तिकस्य ज्ञानप्रदाऽस्ति। भगवत्प्रसादलभ्या पापनाशिनी, पवित्रा, परानन्दप्रदा सा पूजा योगिनां सार्वकालिकी भवति। सा चैषा पूजा आवाहनविसर्जनक्रिया-कलापविनिर्मुक्ता आत्मसंवेद्या विश्वविश्रान्तिरूपिणी योगिनामस्ति। प्रमाता, प्रमाणं, प्रमेयं, प्रमिति इत्येतच्चतुष्टयं परं चैतन्यमेवास्ति नान्यत् किञ्चित्, इति ज्ञानमेव परमात्मनः पूजा नान्या। चराचरमेतज्जगत् देवदेवस्य रुद्रस्य शरीरमेव इति ज्ञानमेव शिवस्य महती पूजा। सैव पूजा योगिनां मङ्गलदायिनी वर्तते।

ये खलु योगिनो न सन्ति त एव लिङ्गे शिवार्चनं कुर्युः। एतानि सर्वकर्माणि ज्ञानदायकानि भवन्ति। उत्पन्ने सति च ज्ञाने सर्वाणि कर्माणि स्वयमेव विनश्यन्ति। पूजया मुक्तिः, शुद्धं ज्ञानं, ब्रह्मविष्ण्वादिदेवपदप्राप्तिः, अणिमाद्यष्ट-सिद्धिः, देवत्वं, गन्धर्वादिपदं, सार्वभौमिकता, मनोहरस्त्रीसौख्यकल्याणभवनानि पुरुषार्थचतुष्टयं च सिद्धयन्ति।

विष्णुः शिलामयं लिङ्गं समभ्यर्च्य परमं पदं लब्धवान्, लक्ष्मीर्विष्णुवल्लभा अभवत्, जगत्कर्ता ब्रह्मा यस्य लिङ्गार्चनेन भारतीं प्राप्तवान्, शची इन्द्राणी जाता, मरुतः पूर्णां श्रियं लेभिरे स भगवान् शङ्करः सर्वचेतनैः सदा पूज्योऽस्ति।

यस्य देहिनः सर्वेन्द्रियाणि कदाचिदपि पूजार्थे संलग्नानि भवन्ति तस्य जीवनं सफलं वर्तते। एककालं द्विकालं त्रिकालं वा मानवैः प्रत्यहं शिवलिङ्गस्य पूजा श्रद्धया कर्तव्या। आसनावाहनार्घ्यपाद्याचमनस्नानवस्त्रोपवीतभूषणगन्ध-पुष्पधूपदीपान्नमाल्यानुलेपननमस्कारविसर्जनैः क्रमशः शिवलिङ्गार्चना विधेया। एतानि च सर्वाणि प्रणवेन (ओङ्कारेण) सह पञ्चाक्षरेण (ॐनमः शिवाय इति मन्त्रेण), त्र्यम्बकमित्यादिश्रौतमन्त्रेण अपरेण श्रौतमन्त्रेण वा प्रतिदिनं देवलिङ्गे श्रद्धया कार्याणि। पर्वतवननदीतीरेषु अन्यत्र वा मनुष्यमुनिदेवयक्षराक्षसगन्धर्वसिद्ध-विद्याधरादितिर्यग्जातिभिरन्यैश्च प्रतिष्ठितं शिवलिङ्गं ब्राह्मणोऽन्यो वा प्रदक्षिण-त्रयपूर्वकनमस्कारद्वारा पूजयेत्। अग्निहोत्रादिमध्ये सूर्यसोममण्डले हृदये ब्रह्मरन्ध्रे वा शिवं पूजयेत्। ये मानवाः सदा मनीषया वन्द्यं रुद्रमभ्यन्तरे ध्यायन्ति ते जिह्वया सोमं लिहन्ति। ये त्वेवं न कुर्वन्ति, ते पुरीषं जिह्वया गृह्णन्ति।

---

१. 'कूर्मेशो गन्धमादने' ( ललितागम–ज्ञानपादे–प्रादुर्भावपटले )

२. 'सेतौ रामेश्वराभिधः' ,, ,,

भवानीसहितरुद्रस्य ध्यानं पूजनं वाराणसी–व्याघ्रपुर-कालहस्तिगिरिषु वासः शिवशङ्कररुद्रादिनाम्नामुच्चारणं नारायणादिनामानि साक्षात्परमात्मनो नामानि न, इति ज्ञानम्, एकस्य देवदेवस्य ब्रह्मविष्णुमहेश्वरा अंशाः सन्ति इति ज्ञानम्, अमी जीवास्तस्यैवांशभूता उपास्याश्चेति ज्ञानं च महतस्तपसः फलानि सन्ति । अतो यथाधिकारं विप्रादिभिर्ज्ञानक्रियाभ्यां भगवान् शङ्करः पूज्यः ।

## सप्तदशोऽध्यायः (परमतत्त्वविवेचनम्)

इदं सर्वं पुरोदृश्यमानं जगत् कस्मिंश्चिदधिष्ठाने अज्ञानेन शुक्तिकायां रजतवत् कल्पितमेव न तु वास्तवम् । कल्पितस्यास्य सकलस्य जगतो यदधिष्ठानं वर्तते तत्तु कल्पितपदार्थातिरिक्तं तद्भिन्नलक्षणञ्चास्ति । अर्थात् असत्यस्य जगतोऽस्य अधिष्ठानं सत्यमेव, यथा असत्यस्य शुक्तिरजतस्याधिष्ठानं शुक्तिका सत्या (व्यावहारिकी) एव, न शुक्तिरजतसदृशी असत्या । अत्र दृष्टान्तरूपायां शुक्तिकायां सत्यत्वं यद्गृह्यते तत् सत्यत्वं व्यावहारिकमेव न तु पारमार्थिकं किन्तु जगदधिष्ठाने तस्मिन् न व्यावहारिकं सत्यत्वं नापि हेतुजं किन्तु पारमार्थिकं सत्यत्वं विद्यते, तस्य सर्वसाक्षिस्वरूपस्य प्रागभावाद्यसंभवेन जन्मनाशाद्यभावात् । सर्वस्य च दृश्यस्य भासकत्वात् तद् अधिष्ठानभूतं चैतन्यं सर्वावभासकं स्वयंप्रभं स्वप्रकाशकमस्ति । यस्य चैतन्यस्य शेषतया सर्वमिदं दृश्यं प्रमास्पदं तत् शेषि साक्षात् सुखमेव । इदं सर्वं जडाजडात्मकं जगत् ब्रह्मणः शेषभूतं यस्मात् प्रियं तस्मात् शेषि तत्त्वं परानन्दः स्वलक्षणं च । तदेव चैतन्यं स्वसत्ता-प्रकाश-प्रियांशैर्जगद् व्याप्य संतिष्ठते । वस्तुतस्तच्चैतन्यं विना जगत्प्रतीतिरेव नास्ति, अपि तु तस्मादेव जगतः सत्ता । तत्तु सत्य-ज्ञान-सुखस्वरूपमनन्तं परं पदं वर्तते । सजातीयविजातीयस्वगतभेदशून्यत्वात्तस्य कश्चन धर्मो न भवति । भवति हि लोके धर्मो धर्मिणो वस्तुन एव न तु धर्मधर्मिणो वस्तुनः । धर्मधर्मिणि वस्तुनि धर्मधर्मिणोर्भेदो नास्ति, तत्र भेदस्यानिरूपणात् । ययोर्भेदोऽस्ति स भेदः प्रकाशात् पूर्वमेव वर्तते, सति भेदे प्रकाश एव नोत्पद्येत । भासिते भेदे सत्येव तयोर्भेदो भवति । यदि द्वयोर्भेदो न स्यात्तर्हि एकस्यैव वस्तुनो भेदस्तु चन्द्रभेदवन्मिथ्यैव । तस्मात् सच्चिदानन्दस्य वस्तुनः स्वरूपमेव । भेदस्तु छायानिर्मितोऽस्ति । इदं द्वैतं दृश्यं मायामात्रमेव वर्तते, वस्तुतस्तु अद्वैतमेवेति निगदति सत्यार्थवादिनी श्रुतिः । स्वतः प्रमाणात्मा वेदो यत् प्रकाशयति तदेव सत्यं वस्तु नापरं किञ्चित् । अतीन्द्रिये धर्मे अधर्मे आत्मनि च वेद एवैकः प्रमाणं नान्यत् परम् । उक्तलक्षणस्य तस्य तत्त्वस्य विशेषनामानि एतानि, अतस्तस्यान्यैः सह संगतिर्नास्ति । शिवशम्भुपरब्रह्मसत्येशानेश्वरादीनि नामानि परमात्मनो रूढ्या भवन्ति । केचन योगरूढ्या वाञ्छन्ति, केचिद्

रूढचैव न तु योगेन वदन्ति, यतोहि निर्विशेष-निरालम्ब-निर्मलाद्वैतस्य स्वानुभूत्येकसिद्धस्य तस्य शब्दगोचराभावात् । नारायणहरिविष्णुमुकुन्दादीनि नामानि तत्त्वपरकाणि न सन्ति, यदि सन्ति, तर्हि परतत्वोपदेशसन्निधिपठितत्वे सति कथञ्चित् योगबलात् न तु मुख्यतः । वस्तुतः सर्वसाक्षिणः परतरस्य मूर्तिः शुद्धा पापनाशिनी स्वतन्त्राऽस्ति, सा च साम्बचन्द्रशेखरस्यैव, सैव सदा ब्रह्मादिभिर्ध्येया । सा मूर्तिर्जगतः सृष्टौ स्थितौ चाम्बया सह वर्तते. संहारे केवला भवति । तामेव मूर्त्ति ब्रह्मादयो देवा ध्यायन्ति । विग्रहसम्प्रदान-युगपत्कर्मसान्निध्यादीनि पञ्च देवादीनां विद्यन्ते परमात्मनस्तदंशभूतानां ब्रह्मविष्णुमहेशानाञ्च प्रीतिः फलप्रदत्वं च वर्तते । परतत्त्वरूपशिवस्य सकलं स्वभाव एव ।

साक्षात् शिवतत्त्वं स्वभावादेव निर्मलं जन्मादिरहितं पूर्णमद्वैतं स्वतन्त्रं प्रकृतितज्जन्यकार्यातीतं लक्ष्यलक्षणहीनं बन्धमोक्षदायकं परशक्तिसमन्वितं पराहन्तानुसन्धानं परमविलासविभूषितं कालकलातीतं कालग्रासवर्जितं सकलाधारमपरिच्छिन्नवैभवं परतत्त्वानुसंधानं विद्यावेद्यं सदोल्लासविलासपरिबृंहितं परमाचार्यानुग्रहेण साम्बशिवप्रसादेन च ज्ञात्वा जनाः संसारबन्धनाद् विमुच्यन्ते । अतः सर्वैः प्राणिभिस्तत्परं पदं विशेषतो विद्यया वेदितव्यं तदस्ति हि परागतिः । मुमुक्षुभिर्मुक्त्यर्थं परतरा सा मूर्तिध्येया, मूर्तिध्यानं विना पराविद्या न जायते । निष्कल-निरालम्ब—निरञ्जनात्मके परे तत्त्वे क्षुद्रजनाः किं कर्तुं शक्नुवन्ति, ततस्तां मूर्त्ति नित्यमाश्रयेत् । येऽज्ञानिनो मानवा ज्ञानावलम्बनभ्रान्त्या मूर्त्युपेक्षां कुर्वन्ति तेषां ज्ञानं न जायते । साधनं विहाय फलावाप्तिर्न भवति, नहि भोजनं विना क्षुन्निवृत्तिर्भविष्यति । तस्माद् आस्तिको ज्ञानोदयपर्यन्तं भक्तिज्ञानजपार्चनादिकं वैदिकं कर्म कुर्यात् ।

## अष्टादशोऽध्यायः ( शास्त्रविमर्शः )

शास्त्रं हि शासनात् शास्त्रं भवति शंसनाद् वा । तत्र शासनं द्विविधं प्रथमं विधिमुखेन, द्वितीयं निषेधमुखेन च । शंसनं तु भूतवस्तुविषयकं भवति न तु क्रियापरम् । विधिनिषेधात्मकस्य शास्त्रस्य शंसनस्य च अज्ञ एवाधिकारी न तु प्राज्ञः, आत्मा, विग्रहो वा चातुर्वर्ण्याश्रमवयोऽवस्थाविशेषालम्बनेन तस्य

प्रसक्तत्वात् । विशेषावलम्बनं शास्त्रं विशेषेसति स्वभावेन प्रवर्तते, तत्र तस्य निवर्तकं नास्ति, किन्तु वर्णाश्रमादिविशेषाध्यासरहितो ब्रह्मवेत्ता शास्त्रं नेक्षते । शास्त्रं केवलं देहावलम्बनेन न प्रवर्तते, देहस्य अत्र विनाशित्वेन फलरूपदेहान्तरे लोकान्तरेऽपि विहितत्वात्, नापि केवलमात्मानमेवावलम्ब्य प्रवर्तते, तत्र शास्त्रस्याकिञ्चित्कर-त्वात् । तस्मात् शास्त्रं भ्रान्तिमति आत्मनि प्रवर्तते । यो हि स्वस्मिन् मोहेन बन्धमोक्षौ संसारविभ्रमात् कल्पयति । तद्धि शास्त्रमापाततो बहुमुखं भाति, किन्तु न्यायत एकमुखं विभाति, न्यायश्च शास्त्रनिर्णायकोऽस्ति तन्न्यायकलापानां स्फुरणं शिवाज्ञया सूत्ररूपेण जातम् । सूत्रस्य तावल्लक्षणम्–असंदिग्ध–सारवद्–विश्वमुखा-स्तोभानवद्यत्वे सति अल्पाक्षरत्वम् । तेषां सूत्राणामर्थं भगवतः शङ्करस्य प्रसादा-न्मुनयो मनुष्याश्च भाष्यरूपेण प्रकटयन्ति । भाष्यलक्षणञ्च सूत्रानुकारिवाक्यैः सूत्रार्थवर्णनपुरस्सरं स्वपदानां वर्णनम् । केचन साम्बरूपरुद्रस्य कृपया भाष्यस्य व्याख्यानं कुर्वन्ति, व्याख्यानञ्च पदच्छेद–पदार्थोक्ति–विग्रह–वाक्ययोजना–क्षेप–समाधानात्मकं भवति । केचिद् वार्तिकरूपेण भाष्यस्य व्याख्यानं विदधति, वार्तिं-कञ्च–उक्तानुक्तदुरुक्तचिन्तनरूपम् । अपरे भाष्यं स्वबुद्ध्या संग्रहरूपेण विस्तरतो व्याकुर्वन्ति । अन्ये प्रकरणरूपेण स्फोटयन्ति, प्रकरणञ्च–शास्त्रैकदेशसंबद्धत्वे सति शास्त्रकार्यान्तिरस्थत्वम् । एवं शास्त्रं सूत्रभाष्यादिभिः साक्षाद् वेदसाधनं स्वात्मोपलब्धये गुरोः सकाशात् सर्वदा श्रोतव्यम्, नहि आत्मलाभात्परं किञ्चिद् विद्यते । स आत्मलाभ आत्मनैव भवति । लब्धालब्धलब्धव्यानां लाभः स्वात्मलाभ एव । विद्यालाभस्तु स्वस्वरूपम्, तत्र निरन्तरं यत्न आचरणीयः ।

लब्धस्यात्मनो या लब्धता वर्तते सा अज्ञानवशादेव । आत्मज्ञानादात्मनो लाभः । आत्मलाभस्तु आत्मज्ञानोत्पत्तिरेव । आत्मज्ञाननिमित्तं यत् पुरुषस्य बन्धनं वर्तते तस्य नाशः स्वात्मलाभमात्रतयैव भवति । वस्तुतत्त्वविमर्शे स्वात्मातिरिक्तं किमपि वस्तु नास्ति, यत् तदतिरिक्तं वस्तु प्रतीयते तद् व्यावहारिकदृष्ट्यैव विभाति । आत्मा समस्तं जगत् व्याप्य संतिष्ठते, तस्मात् केवलमात्मैव भावः, नापरः । स्वस्वरूपलाभेन महान् आत्मानन्दो, या प्रत्यक्षतः परामुक्तिरिति ।

**आत्मस्वरूपम् –**

आत्मा नाम जडस्य तत्प्रकाशस्य प्रकाशकः स्वयंज्योतिः सच्चिदानन्द-स्वरूपः । तस्योपाधिवशात् कल्पितो भेदो न तु स्वाभाविकः, दृश्यमानो हि नैल्यादिधर्मो दृश्यस्यैव नत्वात्मनः यथात्मनो दृष्टधर्मो न विद्यतेऽपि स तु लौकिक

एव, तथैव भेदोऽपि दृश्यधर्म एव, तस्यापि दृश्यत्वात्। दृष्टधर्मो दृश्यो न भवति, तथा सति द्रष्टृबोधो नोपजायते द्रष्टृबोधे दृष्टे सति द्रष्टृता एव न सिध्यति।

एकरूपवस्तुनो परस्परविरुद्धरूपं न घटते नापि दृष्टभेदः, यदि भासते तदा भेदः सत्य एव भवितुमर्हति। यदि दृष्टभेदो नास्ति तदा भेदोऽपि न सिध्यति। एवं यस्य अभेदः स सत्यः स्यात्, भेदस्तु नीलत्वादिवदौपाधिक एव। संसारधर्मो न आत्मधर्मो भवति तस्मादात्मा सर्वदाऽद्वयः, औपाधिकभेदेन जीवेश्वरेत्यादिविशेषस्वरूपभाग् वर्तते, अतो भिन्नं परं पदं चास्ति। तत्र जीवः संसारदोषेण व्यवहारदशायां दृष्टवद् भासते, परमार्थतस्तु न स दृष्टः, किन्तु परमेश्वरो व्यवहारदशायामपि न दृष्टः। यथा आकाशस्थितः सूर्यः चलनादिदोषरहित एकः शरावादिपात्रस्थितजलेषु भिन्नवद् भासते तथैव जीवानामपि भेदः कल्पित एव। यथा सूर्यस्य घटादिषु प्रतिबिम्बं चलतीव भासते तथैव संसारी जीवोऽपि नत्वीश्वरः। पुण्यपापजन्ममरणादिभिर्लिप्तो जीव एव दुःखितो भवति न तु बिम्बभूत ईशः। यथा सूर्ये बिम्बप्रतिबिम्बकल्पना तथा आत्मनि जीवेश्वरकल्पना। यथा जलपात्रे नष्टे सति सूर्यस्य बिम्बप्रतिबिम्बत्वे नश्यतः, तथैवात्मनो जीवेश्वरत्वेऽपि। बिम्बप्रतिबिम्बभावरहितो भास्करो यथा स्वस्वरूपेण दीप्तः सन् प्रकाशते तथैवात्मा जीवेश्वरत्वादिरहितः सच्चिदानन्दस्वरूपेण दीप्यते। यथा प्रतिबिम्बाद् बिम्बभूतो भानुः श्रेष्ठो तदपेक्षया विशिष्टोऽस्ति तथैवेश्वरोऽपि जीवेभ्यः श्रेष्ठो विशिष्टश्च, साक्षित्वात् स्वभावत्वाच्च। तद् यथा आत्मनः साक्षित्वं जीवापेक्ष्या यद् वर्तते तत् साक्ष्यभावेऽपगच्छति, किन्तु तत्र यन्नैसर्गिकं साक्षित्वं तत्तु कदापि न गच्छति; एवं सूर्यस्य भासकत्वं यद् भास्यापेक्षया वर्तते तद् भास्याभावेऽपगच्छति, किन्तु नैसर्गिकं यद् भासकत्वं सूर्ये वर्तते, तत्तु कदापि न गच्छति। अत आत्मनः स्वाभाविकं साक्षित्वं, सर्वकालिकं, व्यावहारिकं तु साक्ष्यपेक्षया वर्तते, एवं सूर्यस्य स्वाभाविकं भासकत्वं सार्वदिकं, व्यावहारिकं तु भास्यभासनापेक्षया संतिष्ठते। स्वाभाविकं साक्षित्वं साक्ष्याभावे व्यपदेश्यं विनैव केवलं स्वरूपेणैव तिष्ठति, एवं स्वाभाविकं भासकत्वं भास्याभावे व्यपदेश्यं विना सूर्यस्य स्वरूपेणैव वर्तते। एवं स्वभावाद् यः साक्षी स एव परमः शिवः, तदैक्यमेव जीवस्य परा मुक्तिः कथ्यते। स्वाभिन्नरूपपरात्मनः स्वतःसिद्धमैक्यं तदैक्यमज्ञाननाशेन स्वत एव प्रकाशते। जीवब्रह्मैक्यविज्ञानाद् यद् अज्ञानं विनश्यति तद् अज्ञानं न भिन्नं नापि अभिन्नं च स सदसद्विलक्षणं, महदादिशून्यपर्यन्तं सर्वं ब्रह्मात्मैक्याज्ञानमहामायाविजृम्भणमात्रम्। संसारहेतुभूतस्य मूलाज्ञानस्य बाधकं ब्रह्मात्मैक्यविज्ञानं वेदादेव भवति।

ब्रह्मात्मैक्यविज्ञानं वेदान्तादेवोपजायते । जाते हि तस्मिन् हृदयग्रन्थिर्भिद्यते सर्वसंदेहो दूरीभवति सञ्चितादीनि निखिलानि कर्माणि नश्यन्ति । तदानीं ब्रह्मविज्ञानेन ध्वस्तमिदं जगदाभासकरूपेण प्रारब्धकर्मफलभोगपर्यन्तं भाति । यानि कर्माणि संसारफलकारणानि सन्ति तान्येव संसारफलभोगसाधनत्वेन देहं जनयन्ति, यानि तु विद्याप्रदायकानि कर्माणि निखिलानि शमदमादीनि सन्ति तानि शरीरं साधनं विनैव विद्यामुत्पादयन्ति । अन्यैः कर्मभिः सम्पादिते देहे यानि विद्याकारणानि सन्ति तानि सर्वाणि स्वानुसारं विद्यां जनयन्ति । एतज्जगदवभासनं प्रारब्धफलपर्यन्तं सन्तिष्ठते, तद् दग्धुं वेदान्तवाक्योत्पन्ना विद्यापि न सक्ता, यतो हि देहोत्पादकानि कर्माणि ज्ञाने स्वतन्त्रतया सम्पूर्णं दाहकस्वरूपं प्रतिबध्नन्ति । परतत्त्वसमुत्पन्ना संसारनिर्वर्तिका विद्या स्वोदयमात्रेण अखिलसत्यतां दहति । दग्धेऽपि जगत्सत्यत्वे फलदायकानि प्रारब्धकर्माणि फलं भोजयन्ति । अतएव तदानीं जगत्सत्यत्वस्य दग्धत्वेन प्रारब्धभोगस्य शेषत्वेन च स प्रारब्धफलभोगपर्यन्तं जीवन्मुक्त इति कथ्यते । जीवन्मुक्तस्य पुरुषस्य किञ्चिदपि पुण्यं पापं वा कर्म न लिप्यते, यतो हि साभिमानस्यैव पुरुषस्य कर्मणः सम्भवति न तु ज्ञानिनः । अहं कर्ता इति प्रतीतेः कर्तृता अहंकृतेरेवास्ति, अहमेव कर्तुः स्वरूपं, स्वयंप्रभ आत्मा तु साक्ष्येव शुद्धात्मनः सर्वदा साक्षिस्वरूपत्वात् । एतादृग्ज्ञानसम्पन्नस्य पुरुषस्य कर्तृता पूर्वमपि नास्ति, ज्ञानवेलायां तु विभातापि सा कर्तृता विद्यया बाधिता भवति, तेन ज्ञानोत्तरकाले कर्म न संतिष्ठते तस्य, किन्तु योगिनोऽपि शरीरोत्पादकं कर्म फलभोगं विना न नश्यति । देहिनः वर्तमानशरीरसम्पन्नं कर्म अस्मिन् लोके परलोके वा फलं ददाति । अस्मिन्नेव लोके फलदायकं वर्तमानशरीरसम्पन्नं कर्म प्रारब्धकर्मविपाकं प्रतिबध्य स्वप्नकाले जागरणसमये वा फलं ददाति ।

अनेन प्रकारेण निरुद्धभोगं प्रारब्धकर्म स्वप्ने जाग्रति वा फलं ददाति । प्रारब्धानुकूलमेव फलं देही प्राप्नोति । देही अत्रत्यसम्पादितस्य अत्युत्कटस्य पुण्यस्य पापस्य वा फलं प्रारब्धकर्मफलभोगं मध्ये एव विच्छिद्य भुङ्क्ते । तत्फलभोगानन्तरमेव पुनः विच्छिन्नं प्रारब्धशेषफलं तद्देहेन देहान्तरेण वा भुङ्क्ते, कथमपि प्रारब्धफलभोगोल्लङ्घनं न सम्भवति । यतो हि प्रारब्धकर्मफलभोगो अवश्यमेव जनैः विद्यमानशरीरेण शरीरान्तरेण युगपत् क्रमेण वा भोक्तव्यः । अनेकदेहभोग्यस्य अनेकस्य फलस्य शुभाशुभस्य कानिचित् कर्माणि कारणानि भवन्ति । तानि कर्माणि अनेकं शरीरं क्रमशः आरभन्ते, तेषां नाशश्च भोगतोऽभिजायते । सम्पूर्णेषु संचितेषु कर्मसु यत् प्रबलं कर्म, तदेव नानाविधान् भोगान् देहांश्चारभते । माहेश्वरी या शक्तिः सैव जडा माया सकलं दुर्घटं घटयति, नात्र कश्चन सन्देहः ।

माया तत्कार्यञ्च सर्वं निरूपयितुं न शक्यम्। तस्या अनिरूप्यस्वभावत्वात्। व्यवहारदशायां श्रुत्युक्तमार्गेण कर्मणा फलहेतुत्वं विद्यते। भोगेन प्रारब्धकर्मणि क्षीणे सति विद्यया मायालेशो निवर्तते। माया स्वयमेकापि विविधाकारा चास्ति, जगद्विवर्तने एकमात्रा सा हेतुः, तस्या एक आकारो वस्तुनः सत्यत्वप्रतिभासने कारणं, द्वितीयो जगतोऽर्थक्रियाकारित्वे, तृतीयः परतत्त्वापरोक्षस्य प्रतिबन्धकत्वे, कश्चिदाकार आत्मस्वरूपस्याच्छादकत्वे, अपरो जगत् प्रतीतिमात्रस्य हेतुत्वे, अन्ये च सूक्ष्माः स्थूला बहवः आकारा वक्तुमशक्याः सांसारिकभिन्नभिन्नकार्येषु हेतवः। ते सर्वे मायाऽऽकाराः कार्यानुगुण्येन कल्प्याः सन्ति। प्रारब्धकर्मणि क्षीणे एव जगत्प्रतीतिमात्रस्य हेतुभूतो मायाभेदः प्रणश्यति।

विश्वमायानिवृत्तिरेव परतरा मुक्तिः। सा च विद्यया सिध्येद् विद्या च वेदान्तवाक्याज्जायते। सा विद्या मुमुक्षोरेव वेदान्तवाक्याद् भवति नान्यस्य। मुमुक्षुत्वञ्च मन्द- मन्दतर- तीव्र- तीव्रतरोत्तरादिभेदेन बहुविधम्। विद्यासाधनबाहुल्ये महत्तर-मुमुक्षुत्वे च सति सा विद्या देव- त्रिमूर्ति- वेद- गुरुसाम्बशिवचिच्छक्ति- स्वविलक्षणशून्यस्वयंभातसर्वसाक्षिप्रत्यगात्मनां प्रसादादुदेति। जातायां च तस्यां विद्वान् विद्वत्तां विहाय स्वयं परं पदं भवति। यथा स्वप्नद्रष्टा जागरणेन स्वप्नाद् विमुक्तः सन् स्वयमेवावशिष्यते तथैव आत्मनोऽन्यरूपेण भासितं समस्तं जगत् स्वप्नोपमं स्वात्ममात्रात्मिकया बुद्ध्याऽवगत्य स्वयमेवावशिष्यते।

एवमुक्त्वा शक्तिपुत्रः पराशरः सच्चिदानन्दे परमाद्वैते प्रत्यगात्मनि निमग्नः तूष्णीमास। ततस्तत्र पराशरस्वात्मानुभूतिप्रदा देवी पार्वती आविरभूत्, किन्तु आत्मानुभूतिलीनत्वात् पराशरस्तां देवीं नाविन्दत्। एवं भूतमात्मलीनं पराशरं विलोक्य देवी शुकदेवं प्रेम्णाऽब्रवीत्। अनेन मुनिना यदुक्तं तत्सर्वं सत्यं, त्वन्तु अस्य पौत्रो व्यासस्य च पुत्रः, अतः किं ते न सिध्यति? मत्प्रसादात् भाग्यवैभवाच्च वेदान्तजन्यं ज्ञानं त्वया लब्धम्, अतः परं त्वत्कृते किमपि अलभ्यं वस्तु नास्ति। चित्तचाञ्चल्यं परित्यज्य आत्मानं पश्य, आत्मतत्त्वानुसन्धानादेव प्राचीना मुनयो विमुक्ता अभवन्। त्वमपि तादृगेवासि। अविवेकिजनदुर्लभं सद्यो मुक्तिकरं ज्ञानं मत्प्रसादं विना नोपलभ्यते। अतो मत्प्रसादावाप्तये निरालसो भूत्वाऽऽदरेण हृदयाम्भोजे वाचि ब्रह्मरन्ध्रे मूलाधारे भ्रूमध्ये वा यथाशक्ति नित्यं मां पूजयेत्। मम निष्कलं रूपं वर्णयुतविग्रहं हस्ताद्यवयवयुतं ब्राह्मणात्मकं लोहपाषाणजन्यं विग्रहं वा

भक्त्या गुरूपदिष्टरीत्याऽर्चेत् । इत्युक्त्वा पार्वती तत्रान्तर्दधे, अन्तर्हितायां तस्यां स्वानुभूतिगलितः पराशरः शुकदेवमालोक्य भवानीगणेशषडाननन्दीश्वरसहितं शिवं प्रणम्याब्रवीत्-यदुमेश एव परं तत्त्वं, वेदान्तवाक्यजैव विद्या, भस्मावगुण्ठनमेव सर्वोत्तमं विधेयं, गुरुरेव संसारतारकः, श्रद्धैव धर्ममोक्षयोः कारणमिति । इतः परं किमपि न वक्तव्यं श्रोतव्यञ्चास्ति । महादेवप्रसादादेव पराशरनामकमिदं पुराणं व्यरचयमिति । पराशरात् पुराणमिदं श्रुत्वा शुको गुरुं प्रणम्य भगवन्तं शिवमस्तौत् । अस्मिन् पुराणेऽष्टादशाध्यायाः, अष्टोत्तरसहस्रश्लोकाः सन्ति इति ।

समाप्तोऽयं पुराणसारांशः